# ॥ धनञ्जयविजयम् ॥

आङ्गलानुवादेन सहितम्

प्रणेता आर्. रामसुब्रह्मण्यार्यः एम्.ए.,बी.टि.
प्राचार्यः संस्कृतविभागः
लयोला कालेज्, मद्रास्

अश्विनीप्रकाशितम्
सि, ६, लयोला कालेज् क्वार्टेर्स्
चूलैमेडु रोड्, मद्रास्-६०० ०९४
१९७४

प्रथमसंस्करणम्
First Edition





*The Author*

यो वै ग्रन्थाननेकान्छुभजनकमुखान्निःसृतान्दीपयित्वा
दन्तेनैकेन दान्तो जगति लिखितवान्नित्यमुक्तं मुकुन्दम् ।
विज्ञानोद्दीपनार्थं गजवदनममुं ज्ञानदीपाधिवासं
कल्याणानां निधानं कविभिरनुदिनं काम्यमानं भजेऽहम् ॥

Published with Financial Assistance from
The Ministry of Education and Social Welfare
Government of India

भारतराजकीयधनसाहाय्येन मुद्रितम्

**Price Rs. 25/-**

मूल्यम्

PRINTED AT
RAMAYANA PRINTING WORKS,
MADRAS-4.

श्रीः

# DHANANJAYA VIJAYAM

(With English Translation)

By

PROF. R. RAMASUBRAHMANIA IYER, M.A., B.T.

LOYOLA COLLEGE, MADRAS-34

ASWINI PUBLICATIONS

'C' 6, Loyola College Staff Quarters

Choolai Medu High Road,

MADRAS-600094

1974



Price:

श्रीः

# श्री शृङ्गेरी श्रीजगद्गुरुसंस्थानम् ॥

श्रीमत्परमहंस परिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्य गुरुपरंपराप्राप्त षड्दर्शन स्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादि-राजधानी-विद्यानगर महाराजधानी-कर्णाटक सिंहासन प्रतिष्ठापनाचार्य श्रीमद्-राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्कर पादपद्माराधक श्रीजगद्गुरु श्रीचन्द्रशेखर भारती-स्वामिगुरुकरकमलसंजात,

श्रीजगद्गुरु शृङ्गेरी श्रीमदभिनव-विद्यातीर्थ स्वामिभिः ॥

अस्मत्प्रियशिष्य - श्रीरामसुब्रह्मण्यार्यविषये नारायणस्मरणपूर्वकं विरचिता आशिषः समुल्लसन्तु ॥

चमत्कृतिजनकवाक्यं काव्यमिति सुप्रथितम् । चमत्कृतिर्नाम सहृदयहृदयावगम्यः आनन्द एव । काव्ये वर्णनीयं वस्तु गिरिनगरादिकं लौकिकः पुरुषो वा भवति चेत् ततः लौकिक आनन्द एव फलम् । विश्वोत्पत्ति - विपत्ति - संस्थितिहेतुः शङ्करो यत्र वर्ण्यते ततः भगवदुपास्तिफलं स्वर्गश्चापवर्गश्च भवतः । सरसकवितासार्वभौमा नीलकण्ठ-मखिनः "यत्सन्दर्भे यदुल्लेखे यद्व्यंग्ये निभृतं मनः । समाधेरपि तज्ज्यायः शङ्करो यदि वर्ण्यते ॥" इत्यवोचन् ॥

यूयं धनञ्जयविजयं नाम काव्यं व्यरचयत । तेन च भक्तवत्सलस्य आशुतोषस्य किरातवेषधरस्य परमशिवस्य चिन्तनं विदधानाः तस्य कृपायाः पात्रतां प्राप्नुत । परमशिवभक्ताग्रेसरस्य धनञ्जयस्य चरित-मुपवर्णयन्तः भजनीयस्य परमेश्वरस्य महिमानं करुणातिशयं च कवि-सरणिमनुसृत्य सरसं प्रतिपादयन्तः पुण्यप्राप्तां वाणीं धन्यां अतनुत ॥

काव्यमिदं तत्र तत्र अवालोकयाम । सरसपदबन्धुरं नानावृत्तो-पात्तशोभं विविधालंकारालंकृतं महाकाव्यलक्षणलक्ष्यमास्ते इदं धनञ्जयविजयं काव्यमिति अस्माकं दृढो विश्वासः समजनि ।

आशास्महे च भगवान् शशिकलावतंसः युष्मान् इतोऽप्यतिशयानैः विद्यायुरैश्वर्यैः समेधयतामिति ॥

राक्षस चैत्र सुदि पञ्चमी }<br>
बुधवासरः }<br>
शृङ्गगिरिः }

इति नारायणस्मरणम्

श्रीः

# आशंसा

श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ॥

अयि भोः, विपश्चिदमेमराः सहृदयाः ॥

प्रथितयशस्सु तत्रभवत्सु न ह्येतत्तिरोहितं यद्वाङ्मये काव्यस्य कीदृशं महितमास्पदमिति ।

काव्यं नाम लोकोत्तरवर्णननिपुणकविकर्म । कवेर्भावः कर्म वा काव्यम्—ईदृश्या व्युत्पत्त्या कविशब्दात् "गुणवचनब्राह्मणादिभ्यः कर्मणि" चेति सूत्रेण ष्यञ् प्रत्यये कृते काव्यपदसिद्धिरिति वैयाकरणी प्रसिद्धिः ।

'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्' इत्याभाणकप्रसिद्धिमनुरुध्य बुद्धिमतां प्रवृत्तिरपि काव्यशास्त्रप्रेरणया भवतीति 'णुद प्रेरण' इति धातोर्व्युत्पादितेन विनोदशब्देन द्योतिता भवति । एतेन काव्यशास्त्रे महता बुद्धिमतामादरातिशयः प्रख्यापितो भवति ।

'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति मम्मटीयकाव्यलक्षणानुसारं निर्दोषं सगुणं स्फुटास्फुटालंकारं च शब्दार्थयुगलं काव्यमिति काव्यलक्षणं भवति ।

श्रीमतां तत्रभवतां पुरतः समानमुपस्थाप्यमानमेतद्धनञ्जयविजयाख्यं ग्रन्थरत्नं नित्यदोषाभावात्प्रसादादिगुणसहितत्वादुपमानाद्यलंकारसहितत्वाच्च स्फुटमेव काव्यकोटिमेवाऽऽटीकते ।

'वाक्यं रसात्मकं काव्यं' इति लक्षणमपि शृङ्गारादिरसभूयिष्ठत्वादस्य काव्यस्योपपद्यते । दृश्यश्रव्यभेदेन विभक्ते काव्ये प्रकृतकृतेः श्रव्यत्वं निर्वि-

वादम्। अन्यकान्याग्यनेकप्रकरणानि। तत्र चास्य प्रकृतग्रन्थस्य अष्टादश-सर्गपरिमाणस्य धनञ्जयविजयस्य महाकाव्यलक्षणसद्भावान्महाकाव्यत्वमुररी-क्रियते। उपजीव्यस्य कथाभागस्य भेदाच्च काव्यं अभिनवसमालोचनेक्षिकया पुनर्द्विप्रकारकं भवति। यस्योपजीव्यकथाभागः पुराणाद्गृहीतस्तत्पौराणिक-मेवमेव यस्य च काव्यस्य नूतनेतिहासस्तदैतिहासिकम्। एवं चास्य धनञ्जयविजयस्य कथाभागः पुराणाद्गृहीतस्तत एवेदं महाकाव्यमिति पौराणिकं भवति।

सर्वजनविदितादितिहासरत्नादुद्धृतोऽस्यकथाभागः। अर्थगाम्भीर्येण संस्कृतसाहित्यजगति प्रथितेन शास्त्रकवितल्लजेन भारविणा 'किरातार्जुनीय-मिति नाम्नोपहारीकृतः, सहृदयलोकैर्मुहुर्मुहुश्चर्वितपूर्वोऽयं कथाभागः प्रकृतकवि-प्रतिभाशाणोल्लीढस्फूर्त्या विलक्षणचमत्कारकरम्भितसरलपदविन्यासेन कमप्य-ननुभूतमानन्दविशेषमुद्भावयन्सहृदयानभिमुखीकरोति।

काव्येऽस्मिन्महाकाव्यलक्षणं संप्रतिपन्नं वर्तते। अस्य शैली सरल-तमा। पाकश्च द्राक्षापाकः। प्रसादगुणपूर्णः। रीतिश्च वैदर्भी। भिन्न-वृत्तत्वं महाकाव्यानुगुणमादृतम्। उपमोत्प्रेक्षादिनैके अलंकाराः रसौचित्य-मनायासेनादृताः। इतिवृत्तानुगुणमुपदेशा लोकोक्तयश्च विवृताः। विविध-रसालंकारैरुपबृंहितमिदं काव्यरत्नं सहृदयानां कालिदासमनुस्मारयति। आ-प्रबन्धं कालिदासच्छाया अन्तर्लीना दरीदृश्यते। यथा—'उत्फुल्लपुष्पस्त-बकावनम्रा (१·२८) वर्णप्रकर्षं हरितोत्तरीयं (१·२९) इत्यादीनि निर्देशार्हाणि।

अन्यच्च विप्रलम्भशृङ्गारानुगुणं कविकुलगुरुणा कालिदासेनेदंप्रथमत-याऽऽदृतं मन्दाक्रान्तावृत्तं इतिवृत्तानुगुणमुपनिबध्नताऽनेन कविना स्वकृतेः कालिदासग्रन्थनैकट्यमभिव्यञ्जितम्। कवेरन्यच्छायायोनित्वमपि भूषणमेव न तु दूषणम्। पदबन्धे, वाक्यरचनायां अलंकारविन्यासे, कथाभागनिर्वहणे च सिद्धहस्तोऽयं कविः तत्र तत्र कालिदासं स्मारयति। यथा—

तपः स चक्रे तृणमर्जुनाख्यं
भुक्त्वासकृन्मुक्तविहारनिद्रः ।
जना वदन्त्यर्जुन इत्यतस्तं
तन्नाम लोकेऽद्य तथा प्रसिद्धम् ॥

'*उमेति माता तपसो निषिद्धा*
पश्चादुमाख्यां सुमुखी जगाम'

यथाह कालिदासः —

इति । तथा '*गन्तव्या या प्रवहति*' (९-४२), 'तत्र स्नात्वा कनखल'—(९·५०), '*ब्रह्मावर्तं तदनु* (९·५१) इत्यादिषु मेघसन्देशानुकरणं सहृदयानामपरोक्षं भवति । भ्रान्तं च काव्यमुपमाद्यलंकारशबलितं विलसति । स्थालीपुलाकन्यायेनोदाहरणद्वयमत्रोद्भियते—

अमुं शृणोत्यप्यतिदीनशब्दं
ददाति वाचं न कथं भवान्मे ।
मन्ये म शम्भुर्न कृपासमुद्रः
स स्थाणुरेवेति वदन्तु सन्तः ॥

अन्यत्र—

यतेर्हि वेषं किल रैवताद्रौ
पूर्वं सुभद्रार्थमकल्पयद्यः ।
भेजेऽधुना पाशुपतास्त्रमीप्सुः
सत्यं सुभद्रार्थमसौ यतित्वम् ॥

इति । तत्र तत्र इन्द्रकृत उपदेशः सार्वजनीनो वर्तते । किं बहुना, कालिदासस्य उपमा, भारवेरर्थगौरवं, दण्डिनः पदलालित्यं नीलकण्ठस्य मुग्धेन्दु-

फलानिभा वक्रोक्तिः, अपि च अनुप्रासयमकादिशब्दालंकारा इत्येतैर्महारत्नैः स्थानानुसारं खचितमिदं काव्यचित्रं कस्य मनो न हरति ।

ग्रन्थकर्ता महाकविः रामसुब्रह्मण्यशर्मा आधुनिकसंस्कृतसमाजे प्रसिद्धः । श्रेष्ठपुरीनिवासिनां पण्डितवरेण्यानां रामनाथशास्त्रिणां पुत्रः शैशव एवाधीतविद्या एते महाविद्याशालायामध्यापकपदवीमलंकृत्य निरन्तरं संस्कृतसेवानिरताः वर्तन्ते । तैरनेकानि काव्यरत्नानि रचितानि । शास्त्राभ्यासेन, विदुषां सेवया, भारत्यनुग्रहविशेषेण, नैसर्गिकप्रतिभया चानर्गलवाग्झरीसंपन्नाः सरसकाव्यरचनाचञ्चवो विराजन्ते । तेषां ग्रन्थरत्नेषु अन्यतममुत्कृष्टं चेदं प्रकृतं महाकाव्यम् । एतेषां महाभागानां परिश्रमेण प्राचीनमहाकाव्यपरंपरा सुरक्षिता वर्तते । आधुनिकसंस्कृतसाहित्यपोषणे महदुपकृतं तैरेतद्ग्रन्थप्रणयनेन । कवेरयमुत्कृष्टोद्योगः सर्वैः सहृदयैरभिनन्दनीयः । इदं च काव्यं महाविद्याशालासु पाठ्यग्रन्थकोटौ निवेशयोग्यं भवति । अस्य महाकवेर्वाणी अनुस्यूतं संस्कृतसाहित्ये प्रवहन्ती सहृदयानाप्लावयतु इति आशासे ।

इति

विदुषां विधेयः

**वि. बालकृष्ण शास्त्री**

प्रधानाध्यक्षः

मद्रपुरी संस्कृतकलाशाला मयूरपुरी,

मद्रपुरी–६००००४.

२-१२-१९७४

॥ श्रीः ॥

श्रीमत्परमहंस परिव्राजकाचार्यवर्य
श्रीमच्छंकर भगवत्पादप्रतिष्ठित
श्रीकाञ्ची कामकोटि पीठाधिप जगद्गुरु
श्रीमच्चन्द्रशेखरेन्द्र सरस्वती श्रीपादादेशानुसारेण
श्रीमज्जयेन्द्र सरस्वती श्रीपादैः

केरलमध्यवर्ति-श्रेष्ठपुर्थमिजन - विद्वद्वररामनाथसुपुत्राय विदुषे श्रीमते रामसुब्रह्मण्यशर्मणे क्रियते नारायणस्मृतिः ।

भवता विरचिते धनञ्जयविजयनामके महाकाव्ये किरातार्जुन-युद्धादिमहाभारतकथामाधारीकृत्य इन्द्रकील - गन्धमादनगिरि-समुद्रेन्द्रविमानवर्णनम्, भूमेः स्वर्गपर्यन्तं मार्गस्य निरूपणं, पुण्य-क्षेत्र-तीर्थविशेषप्रभावः दशावतारवर्णनं, नलोपाख्यानं, नारदेन धर्मपुत्रं प्रति स्वधर्ममहिमप्रतिपादनं, अर्जुनं प्रति इन्द्रकृतभक्ति-स्वरूपोपदेशः शिवस्तुतिरित्यादिविशेषाः नैकवृत्तभासुरैः वैदर्भीरीति-द्राक्षापाक-घटितैः अर्थपुष्टियुतैः उपमावक्रोक्त्याद्यनेकालंकारालंकृतैः अष्टादशसर्गैः संयक् प्रतिपादिता विद्यन्ते । इदं काव्यमुत्तराभिमन्यु-विवाहेन पूर्तिमापन्न वर्तते ।

काव्यरसिकाः आस्तिकाः एतत् काव्यं पठित्वा भगवद्भक्ति-मभिवर्धयन्तः श्रीकृष्णप्रसादात् सर्वाणि मङ्गलान्यवाप्नुयुरिति ।

अस्योत्तमकाव्यस्य कर्ता श्र रामसुब्रह्मण्याख्यो भवांश्च उपर्यु-पर्येवं विधान् ग्रन्थान् विरचयन् प्रेयः श्रेयः परंपराभाग् भूयादिति चाऽऽशास्महे ।

यात्रास्थानम् कलवै ग्रामः<br>(उदीच्य पडाग्ग्व मण्डलम्)<br>राक्षमाऽऽश्विनशुद्ध प्रथमा

नारायणस्मृतिः

## FOREWORD

It gives me great pleasure to write this short foreword to Sri Ramasubramaniar's Mahakavya, *Dhananjayavijayam.*

I consider this a rare privilege, especially since the author's father, Sri Ramanatha Sastri, whom I knew well in my early years, was a pupil of my illustrious father, Sabdikatilaka Panditaraja Ayya Sastrigal of Chendamangalam (Cochin State).

The author has done his best to endow this poem, describing the glorious exploits of Arjuna, with all the attributes of a Mahakavya, as explained in his Introduction.

A casual look at the stanzas in the eighteen Sargas of the poem must impress the reader with the variation in the metres employed. I have no hesitation in saying that the rhythmic flow of the lines wherever you may turn, is almost impeccable.

I must also pay a well-deserved tribute to the author for the uniform clarity and simplicity of the diction, though unfortunately a few errors have crept in, which I hope will be removed from the next edition of the book.

The poem is on the whole a creditable achievement, and I have no hesitation in saying that the author deserves every encouragement.

Madras-<br>15.2-1975

(Sd ) A. RAMA IYER,<br>*Retd. Principal.*

# AN APPRECIATION

(Shri C. R. Pattabhiraman)

It is not easy to write a Kavya in Sanskrit today. Very high standards have been set up in Sanskrit literature in the matter of spiritual and philosophical writings, drama and poetry. We look up to a Sankara or Ramanuja or a Vedanta Desika or Appayya Deekshita in the spiritual and philosophical fields and to a Kalidasa or Bana or Harsha so far as literature is concerned.

Brahmasri Ramasubramanyam, an ardent devotee of Sri Gnanananda Swamigal of Tirukoilur, has written "Dhananjaya Vijayam" under the inspiration of that great Saint who passed away recently. He has brought out in this Kavya, almost all the metres employed by Kalidasa. This itself is no mean achievement. In addition, we have elaborate definitions of 'Ahimsa' (non-violence), 'Bhakti', 'Dharma', etc., well illustrated.

'Dhananjaya Vijayam' deals with Arjuna's life and achievements up to the stage of the 'Bhagavat Gita'. It narrates how the best of the Pandu Princes equipped himself not only for the great war but also for the great "Upadesa" in the 'Gita'. We find him in his father, Indra's court in the Heavens shocked by the way of life amongst 'Devas'. He later realises

that their standards and way of life were different from those of mortals on earth. We similarly see him as an ascetic praying to 'Ishwara' and securing boons and "astras" after severe trials. We also see him fulfilling the role of a great house-holder and husband marrying many princesses who were his admirers.

In the Gita, the Lord says at the time of Mahabharata war that He incarnated as Vasudeva and he was also Dhananjaya among Pandu Princes. The word Dhananjaya "Conqueror of wealth" occurs in important places in the Gita.

Dr. S. Radhakrishnan has pointed out how the Supreme Purusha Narayana manifested himself as Krishna and how Arjuna was 'Nara' and 'Jeevatma'. The 'Jeeva' seeks reunion with the Paramatma.

There are a few 'mantras' relating to Arjuna. In the Mahabharata, we are told that one can conquer enemies, internal and external, by repeating Arjuna's name.

धर्मो विवर्धति युधिष्ठिरकीर्तनेन
पापं प्रणश्यति वृकोदरकीर्तनेन ।
शत्रुर्विनश्यति धनञ्जयकीर्तनेन
माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥

Even today many pious Hindus refer to the 'Sloka' mentioning Arjuna's names when they hear thunder in the sky. Finally in the 'Gita', we are told that wherever there is Krishna and Arjuna, success and prosperity will follow.

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥"

Sri Ramasubramaniam deserves congratulations on this publication. Students of Sanskrit will find in this book not only mellifluous diction but also lofty thoughts. I have no doubt that it will be read widely not only in India but also outside in the Sanskrit world.

"The Grove"
Tyanampet, Madras-18.
16th November 1974.

(Sd.) *C. R. Pattabhiraman*

# INTRODUCTION

The historian and the literary artist both depict an individual or a society or a nation; but there is an essential difference in approach between the two. Ordinarily the historian is concerned with external features of the individuals or of the age, while the literary writer is concerned with what constitutes the character or inner structure of the individuals or the society he depicts. However, the modern historian is tending towards the aim of the literary artist too, and tries to probe also into the depth of character. But the ultimate objective of the truly literary artist has always been to indicate what, in his opinion, the ideal individual or nation ought to be. This is one of the distinctive features of a 'Mahakavya'.

A 'Mahakavya' is a kind of window through which the real culture and art of a nation can be seen. How to lead a dignified life, how to overcome miseries, how to behave, how to adjust ourselves, how to solve human problems and how to face situations—these and other values of life are dealt with in a mellifluous way in a 'Mahakavya' to show "how a man must be."

It is said a Mahakavya must have a theme usually taken from an epic or from History. In this Mahakavya 'Dhananjaya Vijayam' the theme has been taken from the 'Vanaparva' of the Mahabharata. Inspired by an idea given in Shakespear's 'As you like it', I have chosen 'Vanaparva' for my theme. "Sweet are the uses of adversity." This idea was expressed by 'Duke Senior' mainly because of his life experienced in exile in a forest.

A writer must choose a hero endowed with many good qualities and noble traits. Just as the shoe flower is taken as a typical flower to study its various parts, a typical hero is taken by a Mahakavi as the central figure around which a Mahakavya may be painted in colours. Arjuna fulfils that purpose in this Mahakavya.

Another feature of a Mahakavya is the division of the work into various cantos. 'सर्गबन्धो महाकाव्यम्'. All the cantos must be properly and coherently connected. A canto must deal with a particular idea directly connected with the traits of the hero. Each idea emerges from a consideration of a number of facts. This Mahakavyam "Dhanjaya Vijayam" has eighteen cantos. In the first canto we get an idea of the steadfastness that is essential in the pursuit of a goal. Arjuna, the hero is not deterred by situations, temptations and other impediments in achieving his aim of getting a divine weapon. Similarly in the second canto we find Arjuna, jumping to a sudden conclusion and forming a wrong judgment. This accounts for his severe fight with Siva in which he loses all his weapons and is defeated. Thus we get an idea from this canto that we must not come to a hasty canclusion. Othello's suspicion of Desdemona's character on seeing a hand-kerchief was due to a wrong judgment. There must be a proper understanding of facts before plunging into action. Othello's intention in wiping out a bad character from the world might be right. But he was too hasty in his conclusion that Desdemona was wicked. He did not suspend his judgment for a test. That accounted for the tragedy. Much in the same way we get an

idea from another Canto that 'avarice' ends *in* disastrous consequences. Shylock in Shakespear's 'Merchant of Venice' had an avarice for wealth. Consequently his "ducats" and his daughter disappeared *from him*.

Ideas like these have the power to reform men and through *such* men a *society and through society* a whole nation. This is the ultimate aim of a Mahakavya. If this is achieved the purpose of a Mahakavya stands fulfilled. It is not necessary that a writer should follow strictly the details of the original text. He can make changes to suit the context and his aim. That is why there is no rigidity about the definition of a 'canto' (सर्ग) *In this Mahakavya two changes have* been made from the original text of the Mahabharata. Indra in the course of giving some advice to his son Arjuna, has alluded to the story of Nala and Damayanti. In the original text this story is narrated by a sage to Dharmaputra. Similarly Indra speaks about the nature of 'Dharma' in the various 'Yugas' *in the course of his* advice. *In the original text this* is told by Hanuman to Bhima. My intention in writing this Mahakavya is to introduce such ideas as are apt to mould the minds of present day citizens. Hence the change. Dignity of labour, definition of Dharma, 'Bhakti', non-violance and the *like* are some of the ideas illustrated in this book. As far as possible I have *followed the rules* regarding a Mahakavya as laid down by poetics. All the 'Rasas' (sentiments) find a place in this Mahakavya as 'Rasas' are supposed to be the 'Soul' of a 'Kavya'. Viswanatha, a well known sanskrit rhetorician says in his 'Sahityadarpana' 'काव्यं रसात्मकं वाक्यम्' वीर *is the dominant* "Rasa" *in*

# CONTENTS

**Canto III**

1. Siva reveals his real form and Arjuna surrenders at his feet.
2. Arjuna's 'stuti'.
3. Siva blesses Arjuna and presents his 'Pasupata' weapon and disappears.
4. The arrival of the Lords of the directions. All of them except Indra bless Arjuna with boons and presentations.
5. Indra informs Arjuna that his charioteer Matali will be sent to take him to Heaven. All the lords of the directions disappear.

**Canto IV**

1. Arjuna's relaxation after his penance; his soliloquy.
2. Arrival of Indra's Chariot.
3. Description of the divine Chariot.
4. Arjuna receives Matali and takes leave of the Indrakila Mountain.

**Canto V**

1. Description of the path from Earth to Heaven.
2. Arjuna is given a hearty welcome in Heaven.
3. Description of Arjuna's procession along the royal path.
4. Arjuna's impression about the Heaven.
5. Arjuna's meeting with Indra in the Assembly Hall.
6. Description of the dance performed by the water-nymphs.

**Canto VI**

1. Arjuna's life in the Heaven.
2. He is given tution by Chitrasena in Fine Arts.

this Mahakavya. शृङ्गार, अद्भुत, करुण, भयानक and the like are also seen supporting this dominant sentiment. Even शान्तरस can be seen then and there. Descriptions of mountain, city, battle, sea etc., can also be found in this Kavya.

*A word about the origin of this work*

My father late Sri 'Karar' Ramanatha Sastrigal of Parur was well versed in Sanskrit particularly in 'Vyakarana' and 'Tarka'. ('Karar' is our family symbol handed down to us from a distant past). My father was a close contemporary and disciple of Brahmasri Ayya Sastrigal of 'जयन्तमङ्गलम' Chendamangalam in the former Cochin State (Kerala State) It was my father's last desire to write a Mahakavya. It was in the year 1117 ME (1941 AD) while we were travelling in a boat "Chitrabhanu" in the Chitrabhanu 'Samvatsara' that I made the promise to my father of fulfilling his desire just before that boat capsized in 'Vembanadu' lake.

Sri Sri Sri Jnanananda Swamiji, the great Saint of Tirukoiloor who took his immortal frame after a long period of one hundred and seventy-two years, reminded me of this promise and directed me to take up this work in the year 1970 A.D. With his blessings and with his timely encouragement given to me then and there by my well-wishers I was able to complete the work in the same year itself. When the work was almost completed I was laid up with 'Rheumatism'. But 'Rheumatism' could not deter me from fulfilling my promise given to my father. Recalling to my mind Melpathoor Narayana

Bhattatiri's success in writing his Narayaneeyam I prayed the almighty who is residing, in a concentrated spiritual form at 'Guruvayoor'. The prayer was heard. The moment I composed twenty three verses abridging the entire 1023 verses of Narayaneeyam', I was completely cudre of Rheumatism. This piece of twenty three verses finds a place in the beginning of the sixteenth Canto of this book.

Though this work is intended mainly for the use of University students, care has been taken to make it useful and interesting to the general readers who wish to acquaint themselves with the treasures of Sanskrit literature and Indian culture.

I wish to mention here with gratitude that in bringing out this book I have been considerably benefitted by the timely suggestions rendered by Sri R. Ramakrishna Iyer M.A., retired Professor of Sanskrit, Jain College, Madras. Special mention is to be made of the sincere help and co-operation rendered by Sri E.V. Harihara Iyer,Ramayana Printing Works Madras in the printing of this book.

Suggestions for inprovement of this book in future editions will be received with respect and gratitude from friendly critics.

# CONTENTS

**Canto III**

1. Siva reveals his real form and Arjuna surrenders at his feet.
2. Arjuna's 'stuti'.
3. Siva blesses Arjuna and presents his 'Pasupata' weapon and disappears.
4. The arrival of the Lords of the directions. All of them *except Indra bless Arjuna with boons and presentations.*
5. Indra informs Arjuna that his charioteer Matali will be sent to take him to Heaven. All the lords of the directions disappear.

**Canto IV**

1. Arjuna's relaxation after his penance; his soliloquy.
2. Arrival of Indra's Chariot.
3. Description of the divine Chariot.
4. Arjuna receives Matali and takes leave of the Indrakila Mountain.

**Canto V**

1. Description of the path from *Earth* to *Heaven.*
2. Arjuna is given a hearty welcome in Heaven.
3. Description of Arjuna's procession along the royal path.
4. Arjuna's impression about the Heaven.
5. Arjuna's meeting with Indra in the Assembly Hall.
6. Description of the dance performed by the water-nymphs.

**Canto VI**

1. Arjuna's life in the Heaven.
2. He is given tution by Chitrasena in Fine Arts.

3. Indra gives rare divine weapons and arrows to Arjuna.
4. Chitrasena meets Urvasi and gives a good description of the different traits and virtues of Arjuna.
5. Urvasi is asked to meet Arjuna for a conjugal union.
6. She approaches Arjuna who receives her with all respects He treats her on par with his mother Kunti.

**Canto VII**

1. Urvasi tries to attract Arjuna in various ways.
2. Disappointed in her attempt she curses Arjuna:
3. Indra passifies Arjuna and says that Urvasi's curse will be a blessing in disguise and explains the nature of that curse.
4. Lomasa's arrival in Indra's Assembly Hall. Indra speaks about Nara and Narayana.
5. The King of Gods directs the Sage Lomasa to meet Dharmaputra and his brothers on the Earth and take them to pilgrimage.
6. Sage Lomasa leaves the Heaven for the Earth.

**Canto VIII**

1. Dhritarashtra's dream and lamentations.
2. He makes a contrast between his son Duryodhana and Arjuna.
3. Sanjaya speaks very high of Arjuna and tells Dhritarashtra about the life lead by Pandavas in the forest.
4. Sanjaya reminds Dhritarashtra about Pandavas' spirit of retaliation and also of the cruel deeds done by Duryodhana to Pandavas.

**Canto IX**

1. Description of the grief of separation of Pandavas and Panchali from Arjuna.

2. Narada's arrival and his speech about the *greatness* and importance of pilgrimage.
3. Description of the various holy places in India.
4. Narada persuades Dharmaputra to go on pilgrimage.

**Canto X**

1. Lomasa's *meeting* with the Pandavas.
2. Lomasa is leading Pandavas and other Sages in their pilgrimage.
3. Bhima meets Hanuman. The death of the demon 'Jatasura' at the hands of Bhima.
4. Bhima's fight with demons. Kubera and *his friend* are set free from the effect of Agastya's curse.

**Canto XI**

1. Arjuna starts with Matali to crush the demons 'Nivatakavachas'
2. Description of a rough sea.
3. Battle between Arjuna and 'Nivatakavechas'
4. Arjuna's victory over Nivatakavachas.

**Canto XII**

1. A short *description of the floating city of the* demons Peulomas.
2. Fight between Arjuna and the demons
3. Arjuna discharges the 'Pasupata' arrow.
4. The efficacy of the 'Pasupatastra' and its workings.
5. Death of Poulomas and *Kalakeyas in the battle.*
6. Arjuna returns victorious to Heaven with Matali.

**Canto XIII**

1. Matali praises Arjuna and gives a description of the pathetic conditions of the wives of those demons killed in the battle.
2. Arjuna's march through the royal path in the Heaven.
3. Reception given to Arjuna by the celestials.
4. Meeting of Indra and Arjuna—father and son.
5. 'Divyabhisheka' given to Arjuna with purified waters.
6. Indra places a golden 'Kireeta' (Crown) on Arjuna's head and speaks very high of Arjuna's heroism.
7. Arrival of Siva and Parvati. Reception given to them by the gods. Siva praises Arjuna and persuades him to ask for a boon.
8. Arjuna pleads before Siva to show mercy on the innocent people on earth. Having blessed Arjuna Siva and Parvati disappear.
9. Indra defines "devotion" to god.

**Canto XIV**

1. Indra speaks about the nature of various 'Yugas'.
2. Indra alludes to the story of Nala and Damayanti.
3. Arjuna leaves the Heaven for the Earth.
4. Panchali falls senseless due to unbearable grief of separation from Arjuna.
5. Dharmaputra laments. Draupadi regains consciousness.
6. Draupadi speaks about her dream.

**Canto XV**

1. Arrival of Arjuna to the mountain, Gandhamadana.
2. Description of Gandhamadana mountain.

3. Arjuna's meeting with his brother and the great Sages.
4. *Reception given to Matali who reveals Arjuna's victory* over Urvasi and the demons.
5 Arjuna's happy hours with his brothers and Panchali.
6. Indra's arrival with the celestial beings and his blessings.

**Canto XVI**

1. Narada arrives at the palace of Krishna singing songs in praise of the various incarnations of Vishnu:
2. Narada meets Krishna and informs about the evil design of Duryodhana to wound the feelings of Pandavas.
3. Krishna assures Narada that Arjuna will show his valour even without divine weapons before the very eyes of Duryodhana.
4. Narada meets Pandavas and explains the importance of 'Swadharma' and praises Pandavas' adherence to 'Swadharma'.
5. Narada causes all the divine weapons of Arjuna disappear from him.
6. Duryodhana's grand procession and his disappointment.

**Canto XVII**

1. Pandava's life in disguise in the country of Virata.
2. Keechaka's death at the hands of Bhima.
3. Duryodhana sends an army to the Virata Kingdom for steeling the royal cows. Virata goes out to foil that attempt.
4. With an army Duryodhana himself goes to Virata's capital city with the same intention.
5. Uttara, the son of Virata King goes to the battle field with Brihannala as his charioteer.

Canto XVIII

1. Arjuna reveals himself and meets the enemy.
2. Battle between Duryodhana's army and Arjuna.
3. Arjuna discharges 'Mohanastra' and all the enemies are deluded.
4. Uttara returns victorious. All the Pandavas reveal their real identity.
5. Marriage of Uttara with Abhimanyu.
6. Conclusion.

॥ श्री गुरुभ्यो नमः ॥

श्रेष्ठपुरीनिवासिना श्रेष्ठगुणोपेतस्य पण्डितवरेण्यस्य

वे रामनाथशास्त्रिणः प्रियपुत्रेणाष्टमेन

रामसुब्रह्मण्यशर्मणा विरचितं

महाकाव्यम्

# ॥ धनञ्जयविजयम् ॥

—:o:—

## प्रथमः सर्गः ।

ओंकारबीजं गिरिजाकुमारं
  दिव्यप्रसन्नास्यमचिन्त्यरूपम् ।
मातृप्रशस्ताङ्कगतं महान्तं
  काव्यात्मकं तं हृदि भावयामि ॥ १ ॥

अनन्तमानन्दरसं प्रदातुं
  कवित्वशक्तिं विमलां च कीर्तिम् ।
भक्ताय या सा भवति स्वतन्त्रा
  शिवाय मे स्याच्छिवकाम्युमाम्बा ॥ २ ॥

आद्यन्तसेतुं भवमोक्षसेतू
  भित्वा भवाब्धेर्भवसन्निधाने ।
यस्यैव पादौ नयतो मुमुक्षुं
  तं रामनाथं पितरं स्मरामि ॥ ३ ॥

इहांशुजालैरिव पूर्णचन्द्रो
यः सज्जनान् रञ्जयति स्वपद्यैः ।
वाल्मीकिमादौ कविपुङ्गवं तं
विशाखरूपान्तरमाश्रयेऽहम् ॥ ४ ॥

ईदृक्स्वधर्मोऽथ र न त्वधर्मा-
नितिप्रबोधाय पुराणकर्ता ।
ग्रन्थाननेकान्निबबन्ध योऽसौ
व्यासोऽस्तु नित्यं मम मार्गदर्शी ॥ ५ ॥

उमामहेशौ प्रणमामि वन्द्यौ
वदन्ति सन्तस्तु ययोः प्रभावम् ।
कर्तुं प्रपञ्चं किल तं विकर्तुं
लीलेति संहर्तुमपि प्रयुक्तम् ॥ ६ ॥

ऊर्ध्वं समाकृष्य सुखं प्रदाय
प्रयत्नशीलं जनमात्मशक्त्या ।
अन्ते परानन्दमपि प्रदातुः
पादौ मनस्तूलिकया लिखामि ॥ ७ ॥

ऋचो ऋषिभ्योऽपि नमो महद्भ्यः
सप्रश्रयं सम्प्रति गायतो मे ।
अर्थोऽनुधावत्यतिसौष्ठवानि
पदानुसारं वचनानि येषाम् ॥ ८ ॥

एणाङ्कतुल्यः स सुधांशुदृष्टि-
व्यासः कदाचित्करुणार्द्रचेताः ।
विचिन्तयामास विनाभिन्नान्स्तां
स्वबान्धवान्कौरवपाण्डवादीन् ॥ ९ ॥

ऐक्यं चिकीर्षुः स तु बान्धवानां
पौत्रान्प्रवक्तुं हृदि निश्चिकाय ।
परस्परं कौरवपाण्डवाना-
मधार्मिकाणामथ धार्मिकाणाम् ॥ १० ॥

ओघः स सिन्धोरिव संप्रवस्थे
हिमाचलात्कौरवराजधानीम् ।
सुयोधनादीनवलोक्य तेषा-
मधर्मिणां धर्मविबोधनार्थम् ॥ ११ ॥

औचित्यवृत्तिः किल भाविकाले
भाग्यप्रदात्रीति मनीषिवाक्यम् ।
विस्मृत्य कश्चिद्यदि कर्म कुर्या-
दधःपतत्येव स भाग्यहीनः ॥ १२ ॥

अंसं प्रचाल्य प्रियमातुलस्य
खलस्य दुष्प्रेरणया खलोऽसौ ।
औचित्यहीनः स्वपितामहं तं
[illegible] ॥ १३ ॥

अस्तंमितात्मा तदनु प्रतस्थे
दत्वा महात्मा स सुयोधनाय ।
आः ! दुष्ट पापिन्नचिरात्तवोरुं
भीमो ध्रुवं भेत्स्यति शापमित्थम् ॥ १४ ॥

विचिन्त्य किञ्चित्स जगाम वेगा-
द्द्रष्टुं स्वपौत्रं प्रियधर्मपुत्रम् ।
अद्वैतवान्द्वैतवने वसन्तं
सार्धं स्वपत्न्या स्वसहोदरैश्च ॥ १५ ॥

आयान्तमारान्मुनिपुङ्गवं तं
पिबन्दशा पाण्डुसुतः स धर्मी ।
जवेन धावन्ननुजैः समेतः
प्रत्युज्जगामाश्रुसपर्ययैव ॥ १६ ॥

पितामहं धर्मविदं स धर्मी
भक्तिप्रवाहैरभिपिच्य पूज्यम् ।
प्रदाय पाद्यं महते तथार्घ्यं
स प्राञ्जलिः संयमिनं जगाद ॥ १७ ॥

महाप्रभो स्वागतमार्तबन्धो
भवाम धन्याः भवतः प्रसादात् ।
अर्कांशुसंपर्कवशान्निशायां
प्रकाशते किं न विधुः कलाभिः ॥ १८ ॥

सूर्योदयः सुप्तसरोरुहाणां
ज्योत्स्नाकरः शोकघनान्धकारे ।
चैतन्यनौकास्ति भवान् भवाब्धौ
सौभाग्यहेतुश्च तथा स्वयं नः ॥ १९ ॥

कृताः किमर्थं भवता पुराणाः
येनात्मसूत्राणि कृतानि लोके ।
सत्यं भवत्येव सतां प्रवृत्तिः
काले हि कल्याणकरी जनानाम् ॥ २० ॥

ज्ञानोदये भ्रान्तिमतिः कुतः स्या-
त्कुतः स्थिते चर्हिणि सर्पभीतिः ।
कुतोऽस्ति दुःखं भवदाश्रिताना-
मुक्त्वैवमस्याङ्घ्रियुगे पपात ॥ २१ ॥

उत्तिष्ठ वत्सेति वदन्कराभ्या-
मुत्थाप्य धर्मात्मजमालिलिङ्ग ।
क्रुधाऽऽह दुर्योधनमेत्य बुद्ध्या
लुप्तोऽसि किं मूढ सुयोधन त्वम् ॥ २२ ॥

धर्मात्मजस्य स्वयमुत्तमाङ्गं
चिरं स्वहस्तेन स बाष्पनेत्रः ।
संवाहयामास दयार्द्रचेताः
प्रशान्त्वयामास मिताक्षरैश्च ॥ २३ ॥

अलं विषादेन शुभं च भूया-
दिति स्वहस्तेन परामृशंस्तम् ।
आश्लिष्य पौत्रानितरानपीत्थं
तान्दीर्घदर्शी पुनरित्युवाच ॥ २४ ॥

अस्त्येव नूनं महिमा हिमाद्रे-
र्हिमादिहिंस्रप्रकृतस्य तस्य ।
इन्द्रानुमेयं गिरिमिन्द्रकीलं
धत्ते यतोऽसौ सगुणं गुणज्ञः ॥ २५ ॥

शैत्यादमुं शैशिरमामनन्ति
देवैः सदामानिततुङ्गशृङ्गम् ।
महेन्द्रसंचारमहाद्रिमेनं
महेन्द्रशैलं च वदन्ति सन्तः ॥ २६ ॥

तटेरुहाणां सरितो द्रुमाणां
धूतासु शाखासु समीरणेन ।
ध्रुवं तदाभाति नदीदुकूलं
रम्योरुदेशाद्रसिकेन कृष्टम् ॥ २७ ॥

उत्फुल्लपुष्पस्तबकावनम्रा
लताः सहर्षं फलवन्धिवृक्षान् ।
उज्जृम्भमाणा उरमा नवोढाः
प्रियान्प्रियेणैव परिष्वजन्ते ॥ २८ ॥

लतासु तत्पर्णपुटेषु मन्ये
विचित्रपुष्पस्तबकानि दृष्ट्वा ।
वर्णप्रकर्षं हरितोत्तरीयं
धत्ते धरित्री रमणीयगात्रे ॥ २९ ॥

नीहारशृङ्गैर्बहुभिः परीतं
वृक्षैरनेकैर्विततं तमद्रिम् ।
विलोक्य मन्येत विमानगामी
वैडूर्यमध्ये हरिरत्नशोभाम् ॥ ३० ॥

अव्यक्तगीतिर्भ्रमराङ्गनानां
शिखण्डिनामद्भुतताण्डवं च ।
सहंसनादो जलपातशब्दः
पुष्णन्त्यमून्यस्य मनोहरत्वम् ॥ ३१ ॥

सन्तं च धन्यं पुरुषं च धीरं
मान्यातिथिं मानधनं महान्तम् ।
वातेन शश्वच्चलिताद्रिवृक्षाः
समाह्वयन्तीव लताग्रहस्तैः ॥ ३२ ॥

क्वचित्सुदीर्घाक्षिमृगाश्चरन्ति
क्वचिच्च रम्या सितहंसपङ्क्तिः ।
एकत्र नद्याः सलिलप्रवाहाः
सर्वत्र बाणाः कुसुमायुधस्य ॥ ३३ ॥

अमूल्यरत्नाकरमिन्द्रकीलं
शीर्षैरनेकैर्विततैः प्रगुप्तम् ।
सतां विभूत्यै हिमवान्निधत्ते
स्ववक्षसा विष्णुमिवादिशेषः ॥ ३४ ॥

सर्वत्र शश्वन्मृगनाभिगन्धैः
समं गिरिर्भाति मृगाङ्कनाभिः ।
स वायुना वासितभूमिभागाः
सरोजकिंजल्कसमाश्रितेन ॥ ३५ ॥

गिरौ समालोक्य सरस्वती सा
सत्काऽपसामग्र्यसमृद्धिमत्र ।
वाग्रूपिणी वासमभीष्टसिद्ध्यै
सदापि चक्रे ननु वस्तुकामा ॥ ३६ ॥

सम्पत्कराण्यत्र मनोहराणि
विचित्रवस्तूनि निशाम्य माता ।
पद्मानि पद्मा गिरिपद्मिनीषु
चक्रे चिरावासमतिप्रहृष्टा ॥ ३७ ॥

तथापि तत्रातिथयो न यान्ति
न दृश्यते दिग्गजनाधिवासः ।
न किन्नरा नापि नराश्च सन्ति
महाप्रभावो हि पिनाकिनोऽसौ ॥ ३८ ॥

तत्रैव गत्वा तपसा प्रतोष्य
देवेन्द्रसूनुर्हरमिन्दुचूडम् ।
लभेत तद्‌विजयाय तस्मा-
त्पिनाकिनः पाशुपतास्त्रमेव ॥ ३९ ॥

उक्त्वा महानित्थमथार्जुनाय
योग्याय तस्मै प्रददौ दयालुः ।
सुचित्रकाराय यथा सुवर्णं
तथा महामन्त्रमभीष्टसिद्ध्यै ॥ ४० ॥

पिता महात्प्रीतिवशादवाप
प्रतिस्मृतिं नाम तु मन्त्ररत्नम् ।
यस्य प्रभावात्सहसा किलासौ
प्रवृद्धशक्तिर्विजयस्तदाऽभूत ॥ ४१ ॥

व्यासस्ततः प्रस्थितमर्जुनं त-
मनुप्रयातुं सहसा सहायम् ।
सृष्ट्वा च यक्षं कमपि प्रभावा-
त्तिरोदधे तत्क्षणमेव मान्यः ॥ ४२ ॥

प्रत्युज्जगामार्जुनमग्रनीन्द्रः
द्विजेन्द्ररूपेण सुतं प्रियं तम् ।
स्वर्गस्थितानामपि नः पितृणां
स्नेहानुबन्धस्तु महान्सुतेषु ॥ ४३ ॥

वने भवेद्विघ्नमयं समाधे-
रतः सधैर्यं धर सर्वदापि ।
अमोघशस्त्राणि महेन्द्रशैला-
वित्येवमुक्त्वा सदिवं जगाम ॥ ४४ ॥

यक्षेण सार्धं क्षणमेव तीर्त्वा
मार्गं महत्या किल मन्त्रशक्त्या ।
गत्वा गिरिं प्रक्रमते स्म पार्थ-
स्तपः स तप्तुं तदधित्यकायाम् ॥ ४५ ॥

पञ्चेन्द्रियाश्वान्मनसा निगृह्य
स्वात्मानमेवात्मनि योजयित्वा ।
योगाधिरूढोयमनन्यदृष्टि-
र्नासाग्रदृष्टिः शिवमीक्षते स्म ॥ ४६ ॥

यर्तोहि वेषं किल रैवताद्रौ
पूर्वं सुभद्रार्थमकल्पयद्यः ।
भेजेऽधुना पाशुपतास्त्रमीप्सुः
सत्यं सुभद्रार्थमसौ यतित्वम् ॥ ४७ ॥

अचञ्चलः पञ्चमहाग्निमध्य-
मध्यास्य धीरो ज्वलनं विजित्य ।
पञ्चाननं सञ्चितयोगशक्ति-
रानन्दबाष्पैर्भृशमस्नपयिष्यत् ॥ ४८ ॥

वर्षासु गर्जज्जलदाम्बुपाताः
शिवस्वरूपे दृढचित्तवृत्तिम् ।
न प्राभवंश्चालयितुं मुनीन्द्रं
जीमूतवाहस्य सुतः किलायम् ॥ ४९ ॥

न शीतवायुर्न तुषारपाता
न चोर्वशीवश्यकटाक्षदृष्टिः ।
न चापि बाणा झषकेतनस्य
कर्तुं तपोविघ्नमथास्य शेकुः ॥ ५० ॥

तपः स चक्रे तृणमर्जुनाख्यं
भुक्त्वाऽसकृन्मुक्तविहारनिद्रः ।
जनाः वदन्त्यर्जुन इत्यतस्तं
तन्नाम लोकेऽद्य तथा प्रसिद्धम् ॥ ५१ ॥

पार्थेन नीतानि बहून्यहानि
परं न दृष्टं तपसः फलं तु ।
अतः स्मरन् शम्भुमतन्द्रितः स-
न्प्रायोपवेशाय मतिं व्यधत्त ॥ ५२ ॥

भूतेशवर्जं निखिलाश्च देवाः
सप्तर्षयोऽप्यस्य तपांसि दृष्ट्वा ।
आश्चर्यमाश्चर्यमिति प्रशंसां
प्रमुक्तकण्ठं जगुरुच्चवाक्यैः । ५३ ॥

उमा तु माता जगतां स्वतन्त्रा
प्रायोपवेशं च चिकीर्षुमेनम् ।
दृष्ट्वा दयार्द्रा तमनुग्रहीतुं
जीवेश्वरं शम्भुमवोचदित्थम् ॥ ५४ ॥

धावत्सु भीतेषु पुराऽमरेषु
दृष्ट्वा विषं दारुणकालकूटम् ।
पपौ भवान्दीनदयावनार्थं
तथाऽधुना रक्षतु पुत्रकं मे ॥ ५५ ॥

दक्षस्य शापात्कृशतामवाप्य
निशाकरं तं पतितं विलोक्य ।
अन्वग्रहीत्पूर्णकलो भवेति
तथाऽधुना रक्षतु पुत्रकं मे ॥ ५६ ॥

अक्षिप्रदानं कृतवन्तमेकं
गण्डूषधारैरभिषिक्तवन्तम् ।
वनेचरं रक्षितमप्यवैमि
तथाऽधुना रक्षतु पुत्रकं मे ॥ ५७ ॥

मृकण्डपुत्रं भयभक्तियुक्तं
संप्राप्य वेगात्पदयोः पतन्तम् ।
शक्त्या भवानेव ररक्ष भक्तं
तथाधुना रक्षतु पुत्रकं मे ॥ ५८ ॥

सहस्रयोनित्वमवाप्य शापा-
 द्भवन्तमाराध्य तपोभिरिन्द्रः ।
यथा विमुक्तो भवतः प्रसादा-
 त्तथाऽधुना रक्षतु पुत्रकं मे ॥ ५९ ॥

संरक्षितोऽकिंचनपञ्चमोपि
 चिदम्बरेशस्य पदावलम्बी ।
भक्तावतंसो भवता स नन्द-
 स्तथाऽधुना रक्षतु पुत्रकं मे ॥ ६० ॥

अमुं शृणोत्यप्यतिदीनशब्दं
 ददाति वाचं न कथं भवान्मे ।
मन्ये स शम्भुर्न कृपासमुद्रः
 सः स्थाणुरेवेति वदन्तु सन्तः ॥ ६१ ॥

जानामि शम्भो तव निर्दयत्वं
 शूलेन ते ताडितवान्सुतं मे ।
मारस्तथा नेत्रसमुद्भवेन
 क्रोधाग्निना बन्धुजनोऽपिदग्धः ॥ ६२ ॥

प्रसादयामास दशाननादी-
 नधार्मिकानप्यसुरांश्च दुष्टान् ।
परं तु तं पुत्रमनर्घशीलं
 न शंकरः पश्यति चित्रमेतत् ॥ ६३ ॥

आक्रन्दितं वा रुदितं मयाऽस्य
फलं किमस्त्याहतमानने वा ।
कस्यास्ति लोके मयि चित्तमार्द्रं
न मत्समाऽस्त्येव हि मन्दभाग्या ॥ ६४ ॥

आवर्तगर्ते पतितेव मन्ये
ग्रस्तेव कण्ठे भ्रमतीव मूर्धा ।
मनोऽपि मे त्रुटयत एव नूनं
दृष्ट्वा तपस्यन्तममुं कुमारम् ॥ ६५ ॥

निबोध सत्यं दृढनिश्चयं मे
धनंजयोऽसौ यदि नश्यतीत्थम् ।
सतीव योगाग्निसमाधिमेत्य
शरीरमेतच्च परित्यजामि ॥ ६६ ॥

आकर्ण्य वाचं हृदयस्पृशं तां
मैवं भणेति प्रयतां भवानीम् ।
विलोक्य किञ्चिद्विमनायमानां
प्रचक्रमे शम्भुरुमां प्रवक्तुम् ॥ ६७ ॥

स्नेहाधिरूढां तव चित्तवृत्ति-
मवैमि भद्रे तनयं प्रतीत्थम् ।
स्नेहश्च पुत्रोपरि तादृशं मे
कथं न जानासि सुमध्यमे त्वम् ॥ ६८ ॥

जन्यस्य हेतुर्विजयस्य विघ्नो
विनाशकारीत्यपि विद्धिमन्युम् ।
क्रोधो भवत्येव सुशिक्षितोऽपि
क्षत्तस्य पार्थस्य परंतपस्य ॥ ६९ ॥

सम्मोहबीजः खलु कोप एव
सम्मोह एवात्र विनाशहेतुः ।
कोपाच्च मोहान्निधनं ययुस्ते
लङ्केश्वरश्च त्रिपुरेश्वराश्च ॥ ७० ॥

कोपादगस्त्यं नहुषः पदेन
सर्पेति सर्पेति तुतोद मान्यम् ।
तथैव शप्तः स तु सर्परूप-
मासाद्य भूमौ सहसा पपात ॥ ७१ ॥

चाणक्यनामा द्विजवर्य एकः
क्रोधेन नन्दैरपमानितोऽभूत् ।
कौटिल्यतन्त्रैर्निहताश्च नन्दाः
सर्वेऽपि मौर्येण समूलमेव ॥ ७२ ॥

प्रह्लादवाक्यं स्वपिता निशम्य
स्तम्भं तु खड्गेन बिभेद रोषात् ।
ततााविरासीन्नरसिंहमूर्ति-
र्जघान दैत्यं निशितैर्नखाग्रैः ॥ ७३ ॥

जानामि ते सुभ्रु सुतानुकम्पां
मातां हि लोकस्य तथापि जाने ।
स्नेहश्च पुत्रोपरि तेऽस्ति तादृक्
यादृक् न जानासि सुतस्य दोषम् ॥ ७४ ॥

धनंजयस्यापि धनुर्धरस्य
तपस्यतोऽप्यस्य दृढव्रतस्य ।
निगृह्य कोपं पुनरुद्धरामि
जानीहि मां दोषहरं हरं च ॥ ७५ ॥

वत्सेषु वात्सल्यमतीव मातु-
र्विलोक्य मान्ये प्रियमेव कर्तुम् ।
इतो गमिष्यामि तमिन्द्रकीलं
त्रातुं तत्र प्रेरणयैव जिष्णुम् ॥ ७६ ॥

निशम्य वाक्यं निटिलेक्षणस्य
नियम्य किञ्चिन्मनसो विकारम् ।
इदं प्रियं प्रेमरसानुविद्धं
गिरीशपुत्री गिरिशं जगाद ॥ ७७ ॥

अहं च जाने भवतोऽपि कोपं
नेत्राग्निदग्धः किल पुष्पधन्वा ।
अतोऽद्य यातुं भवता सहैव
मामप्यनुज्ञातुमितोऽभियाचे ॥ ७८ ॥

इति गिरिवरपुत्र्या वाक्यमाकर्ण्य सद्यः
पशुपतिरपि देवीं तामुवाचेति बाढम् ।
वरवरदसमीपे संवमी सा च गौरी
क्षितिधरशिखरं तद्गन्तुकामातिऽसज्जा ॥ ७९ ॥

पुररिपुरथ सोऽभूच्छातकुम्भामतुल्यः
कुटिलकठिनचापं स्वांसदेशे दधानः ।
तुहिनगिरितनूजामक्षिकोणेन पश्य-
न्बहुशितशरहस्तो रक्तनेत्रः किरातः ॥ ८० ॥

हिमगिरितनयापि स्मेरवक्त्रा चकाशे
निजपतिमवलम्ब्य स्कन्धदेशे किराती ।
उरसि घटकुचाभ्यां भर्तृपार्श्वे लसन्ती
विगलितकचबन्धा विद्यमानेव विद्युत् ॥ ८१ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
प्रथमः सर्गः ॥

—:*:—

## द्वितीयः सर्गः ।

भुवं करोत्येव शुभं किरातयो-
स्तयोरिदं क्षेमकरं गुणाकरम् ।
कटाक्षजातं कृपया द्रवीकृतं
कृतान्तभीताभयदानतत्परम् ॥ १ ॥

किरातरूपैरनुयायिभिः समं
समानवर्णैरुपशोभिभिर्जनैः ।
तमिन्द्रकीलं ननु वश्यकान्तिभिः
स्वकान्तया सार्धमथागतो हरः ॥ २ ॥

यथा बभौ खाण्डवकाननं विश-
न्कृशानुरत्युग्रशिखाभिरुज्वलः ।
तथाऽत्र सौवर्णनिभैर्बभौ भृशं
कृशानुरेताश्च सहानुयायिभिः ॥ ३ ॥

यदा तु शुश्राव परंतपोद्यमं
तपोद्यमाद्धारयितुं धनंजयम् ।
तदाऽऽभिचारक्रियया स दुर्मति-
र्मतिं व्यधत्त त्वरया सुयोधनः ॥ ४ ॥

विलोक्य तत्कर्म तथापि निष्फलं
फलाभिसन्ध्यर्थमसौ नियुक्तवान् ।
वराहमूकं किल मूकदानवं
वने निहन्तुं विजयं तपोधनम् ॥ ५ ॥

सुरेन्द्रसूनुं परिरक्षितुं वरं
    वरप्रदानाय किरातदम्पती ।
वराहमूकं रभसा सविभ्रमं
    भ्रमन्तमेनं विनिहन्तुमागतौ ॥ ६ ॥

प्रतिक्षणं कृत्रिमतीक्ष्णवीक्षणं
    क्षणाद्वराहः परितः क्षिपन्नसौ ।
भयानकं हुंकृतिनिस्वनं मुहु-
    र्मुहुश्च कृत्वा पुरतस्तु पुप्लुवे ॥ ७ ॥

इतः प्रयातीति किरातशंकरः
    करेण निर्दिश्य दुधाव स द्रुतम् ।
अनुप्रधावंस्तमतीत्य सत्वरं
    वराहमूकोप्यतिरंहसा ययौ ॥ ८ ॥

हरस्तदा दानवमप्यनुव्रजन्
    व्रजन्तमग्रे मनसेव रंहसा ।
किरातरूपस्य मृगानुसारिणः
    पिनाकिनस्तद्वपुरेव संदधौ ॥ ९ ॥

वराहरूपी स तु कालचोदित-
    स्तदिन्द्रपुत्रस्य महातपोवनम् ।
पलायते स्माथ परंतपान्तिकं
    तदन्तमिच्छुः प्रविशन्ससाहसम् ॥ १० ॥

सघोणदन्तैश्कृतघर्घरस्वनं
स्वनं च नासाग्रविसृष्टहुंकृतम् ।
रवं च कण्ठागतभीकरं दृढं
दृढः स शुश्राव वराहसाहसम् ॥ ११ ॥

जितेन्द्रियः सन्नपि संप्रबोधित-
स्तया प्रबुद्धोऽपि न मः पराजितः ।
तदा पितुर्वाक्यमनुस्मरन्नयं
स्वयं समाधेरुदतिष्ठदर्जुनः ॥ १२ ॥

स नेत्रमुन्मील्य समीक्ष्य राक्षसं
क्षणात्समुत्थाय च बाणमग्रहीत् ।
तपःसमाधेः किल विघ्नकारिणः
शरेण पार्थो निधनाय तत्वरे ॥ १३ ॥

तदाऽशृणोद्धैरमिदं वचो दृढं
दृढात्मना केनचिदीरितं वने ।
नराधम प्राकृत मुच्यतामयं
मया हि वध्यो विरम त्वमुद्यमात् ॥ १४ ॥

शराग्रहस्तेन तु सव्यसाचिना
पिनाकपाणेरपि धिक्कृतं वचः ।
शरं किरातोऽपि मुमोच तत्समं
समं वराहाभिमुखं गतौ शरौ ॥ १५ ॥

भयात्तु मृत्युः स किरातरूपिणं
निरूप्य मृत्युंजयमित्यतिद्रुतम् ।
प्रधाव्य मूकं शरणं ययौ तत-
स्तदानुभूतप्रहरं तथा स्मरन् ॥ १६ ॥

कठोरदीर्घारवदीनहुंकृतिः
कृतीव मूकत्वमवाप दानवः ।
प्रसह्य तामात्मवियोगवेदनां
विना विलम्बं सह मृत्युना गतः ॥ १७ ॥

उपारमन्निर्झरसीकरस्वनो
वनेऽपि हंसादिविहंगकूजनम् ।
क्षणेन मूके सह मृत्युना गते
गतं च मूकं वनमेव तत्क्षणम् ॥ १८ ॥

पार्थेन विद्धः स तु दानवो यदा
तदा किरातो महतीं च रौद्रताम् ।
अवाप्य किंचित्स्फुरिताधरस्त्विषा
रुषा ज्वलन्तं स ददर्श फाल्गुनम् ॥ १९ ॥

स भर्त्सयामास किरातशंकरः
परंतपं तीक्ष्णवचोभिरर्जुनम् ।
कथं स विद्धः किल पापिना त्वया
मया वराहः पुरतः प्रधावितः ॥ २० ॥

अमुं तु जन्तुं मम हन्तुमर्हता
यतो वनेऽस्मिन्निधिरेव तादृशः ।
मयैव जन्तुः प्रथमं च लक्षितः
क्षतो मयैव प्रथमं च धावितः ॥ २१ ॥

वयं वनेऽस्मिन्नधिवासिनो जनाः
जनाधिपोऽहं विपिनस्य शासिता ।
तपोधन! त्वं मम सम्मतिं विना
विनाशकाले विपिनं प्रविष्टवान् ॥ २२ ॥

विडालवृत्त्या विपिनप्रवेशनं
प्रविष्टमात्रेण वराहनिग्रहः ।
महापराधौ स्त इमौ त्वयि ध्रुवं
ध्रुवं च दण्ड्या हि महापराधिनः ॥ २३ ॥

स्वधर्मवादं स निशम्य धूर्जटे-
र्जटाकलापेन मनोहराननम् ।
परं जिगीषुः परकालवत्स्मरः
स्मरान्तकं प्रत्यवदत्स कृत्यवित् ॥ २४ ॥

ममातिथेरत्र वनप्रवेशनं
विनाविपत्तिं तु तपः समाधये ।
किमेवमेवातिथिरत्र पूज्यते
यतेर्न वाङ्मात्रमपीह सत्कृतिः ॥ २५ ॥

क दिव्यरूपं तव काञ्चनप्रभं
प्रभातिरिक्तं क्व च निष्ठुरं वचः ।
कदापि काले कलिदूषिते नरो
न रञ्जनीयः खलु वाग्रसंपदा ॥ २६ ॥

स्वधर्मवादिन्वदसीह तं यथा
तथा न धर्मं चरसीति विस्मयः ।
क्षितीशधर्मो हि तपोधनावनं
वने स कुर्यात्क्षितिपो न तद्वधम् ॥ २७ ॥

त्वमेव पापी च खलो नराधमो
मुधैव ते जल्पनमत्र वर्तते ।
भवाम्यहं पाण्डव इत्यतो मया
धिया विसृष्टः किल तीक्ष्णसायकः ॥ २८ ॥

स मां जिघांसुर्ह्यनमागतस्तत-
स्ततो विसृष्टेन शरेण मारितः ।
क्षत्रस्य धर्मो विहितस्तथाविधे
यथाहमर्हः खलु वाणमुक्तये ॥ २९ ॥

स कोपमुद्दीपयितुं प्रचक्रमे
क्रमेण पार्थोऽथ शिवः शितैः पदैः ।
ज्वालां वनाग्नेर्मरुता वने यथा
यथाऽग्निजिह्वां भृशमाज्यधारया ॥ ३० ॥

श्रुतं च जारैः पुरुषैः पतिव्रता
सुतांस्त्वयाम्बा ननु तानजीजनत् ।
अनेकभर्त्री जननी च वो यथा
तथैव पाञ्चालपतेः सुता सती ॥ ३१ ॥

निशम्य शम्भोरवहेलनं परं
परंतपः सन्नतिकोपमूर्च्छितः ।
किरात! पापिन्मृगयार्थिनोऽस्तु मे
मृगस्त्वमेवेति शरं स संदधे ॥ ३२ ॥

स निश्चलः स्थाणुरिवात्र शंकरः
किरातरूपी किल तीक्ष्णचक्षुषा ।
विलोक्य जग्राह सदाविचक्षणः
क्षणेन कौन्तेयविसृष्टसायकम् ॥ ३३ ॥

पुनः प्रयुक्तानपि सव्यसाचिना
पिनाकपाणिः प्रतिगृह्य सायकान् ।
क्षणेन तीक्ष्णान्मयि सायकान्पुनः
पुनश्च मुञ्चेति जगाद सस्मितम् ॥ ३४ ॥

किरात! मृत्युंजयसायकोपमा-
निमांश्च मोघीकुरु मर्मभेदिनः ।
इति ब्रुवन्भास्कररश्मिभासुरा-
न्सुरेन्द्रपुत्रोऽपि मुमोच सायकान् ॥ ३५ ॥

इमेऽपि साम्येन तथात्मसारकृताः
कृतान्तकालेन समूलमाशुगाः ।
स सव्यसाची स्तिमितेक्षणोऽभव-
द्भवप्रभावेन विना प्रभावम् ॥ ३६ ॥

अविद्धरुं स्थाणुमिवाक्षतं परं
परात्परं दीर्घदृशा विचारयन् ।
तथाऽस्य रूपं विजयो निरूपय-
न्नयं क इत्यात्मनि सोऽप्यचिन्तयत् ॥ ३७ ॥

भवेत्स साक्षाद्भव एव वाऽसुरो
सुरोऽपि वा यक्ष इहागतोऽथवा ।
दिवौकसामागमनं श्रुतं मया
वियच्चराणाममकुन्महागिरौ ॥ ३८ ॥

न कोऽपि शक्तो मम कार्मुकोद्भवा-
न्भवादृते सोढुमिमान्महाशरान् ।
अमोघगाण्डीवशरासनोऽधुना
धुनोति न व्याधमिमं महीतलात् ॥ ३९ ॥

उमेशवर्जं यदि वास्तु भासुरः
सुरोऽसुरो यक्षजनोऽथवाप्यसौ ।
यमस्य दुर्गां लघु तं महापुरीं
पुरा नयामि ध्रुवमद्य सायकैः ॥ ४० ॥

इतीव पार्थः सहसाहसां हरे
हरे तदाऽऽग्नेयशरं विसृष्टवान् ।
प्रसार्य जिह्वां पुरतस्तदाशुग-
स्तदाश्वगच्छच्छशिशेखरान्तिकम् ॥ ४१ ॥

उपेयिवान्पावकमायको द्रुतं
तमार्तिहन्तारमथार्तिजिह्वया ।
लयं गतोऽभूच्च ललाटलोचने
नवाऽम्बुवृष्टिर्लयमेति सागरे ॥ ४२ ॥

अमोघतूणौ हरनेत्रवीक्षणा-
त्क्षणाद्गतावक्षयसायकौ क्षयम् ।
मुदाऽग्निदत्तौ विजयाय तौ वने
वनाग्निदग्धे किल खाण्डवे पुरा ॥ ४३ ॥

असंशयं कश्चिदयं भवेत्पुमा-
नमानुषः सर्वशरान्ग्रसत्यसौ ।
इति प्रशस्तात्मबलेन शंकरं
शरासनाग्रेण निहन्तुमाययौ ॥ ४४ ॥

यदा समाकृष्य धनुर्ज्यया हरं
परं प्रहर्तुं विजयः प्रचक्रमे ।
तदा किरातेन तु सन्यमाचिनः
पिनाकिना तद्धनुरप्यपाहृतम् ॥ ४५ ॥

प्रणष्टचापः पुनरप्यसौ स्मर-<br>
न्स्मरारिमेनं दृढभक्तवत्सलम् ।<br>
वृषध्वजे तच्छितखड्गधारया<br>
रयान्वितस्ताडितवान्नृपात्मजः ॥ ४६ ॥

यदा यदा ताडितवान्परात्परं<br>
परंतपः सत्यपराक्रमो दृढम् ।<br>
तदा तदा दारुणमर्दितं जग-<br>
ज्जगन्निवासैः सह सर्वजन्तुभिः ॥ ४७ ॥

असिः प्रयुक्तोऽप्यतितीक्ष्णकान्तिना<br>
विना फलं स स्वयमेव खण्डितः ।<br>
ततः शिलाभिस्तरुभिश्च विक्रमः<br>
क्रमातिगो योद्धुमसौ प्रवृत्तवान् ॥ ४८ ॥

प्रसह्य वृक्षान्निखिलाश्च ताः शिलाः<br>
शिलेव तस्थौ भगवानुमापतिः ।<br>
तथापि योद्धुं समुपाययौ भवं<br>
भवेन संप्रेरित एव पाण्डवः ॥ ४९ ॥

बलात्स धूपं जनयंस्तदा मुखे<br>
मुखे किरातं प्रजहार मुष्टिभिः ।<br>
तमर्दयामास हरो धनंजयं<br>
जयं चिकीर्षुं स च वज्रमुष्टिभिः ॥ ५० ॥

मिथः प्रमुष्ट्यार्दयतोस्तयोश्चटे
चटेति शब्दः समपद्यत द्वयोः ।
समं प्रमत्तद्विपयोः स विग्रहः
सविग्रहोऽभूदिव शम्भुपार्थयोः ॥ ५१ ॥

तथा चकम्पे धरणीधरैः समं
समीक्ष्य युद्धं धरणी तथाविधम् ।
विरिञ्चिमुख्या विबुधादिभिः समं
समेत्य हाहेति यथा विचुक्रुशुः ॥ ५२ ॥

परं प्रगृह्यार्दयतोस्तयोश्चिरं
चिरेण संघर्षणवक्षसोर्मिथः ।
शरीरसंपीडनमत्सरो मुहु-
र्मुहुः पदाघातमयं करोऽभवत् ॥ ५३ ॥

स पीडिताङ्गेन भृशं सुपीडितं
सुपीडयन्व्यक्रमदग्निवीक्षणैः ।
सुरेन्द्रपुत्रो बत ताडितः परं
परंतपोऽप्यत्र परेण तापितः ॥ ५४ ॥

अजं निगृह्याजगरो महान्यथा
तथा स निष्पीडयति स्म पाण्डवम् ।
अपातयच्चं भुवि वीरतेजसं
स्वतेजसा तस्य मनो विमोदयन् ॥ ५५ ॥

निपातितोऽभूद्विजयोऽपि निर्दयं
दयालुनाप्येवमतीव मर्दितः ।
महेशमेवाथ स धर्मतत्परः
परात्परं प्रार्थयते स्म पाण्डवः ॥ ५६ ॥

निहन्ति मां कश्चन कारणं विना
विनापराधं विजनावनौ वने ।
कृपापयोधे करुणा तवास्ति किं
किमस्ति वा दीनजनावनं प्रभो ॥ ५७ ॥

तदस्य दृष्ट्वा वनरोदनं फलं
फलेच्छया पाण्डुसुतः परंतपः ।
परानुकम्पां जगदेकमातरं
करावलम्बार्थमपैक्षतेश्वरम् ॥ ५८ ॥

त्वमुच्यसे भक्तजनप्रिया न किं
न किं द्रवत्यम्ब मनो विलोकय माम् ।
विशिष्य माता तनयान्समीक्षते
क्षतानकम्प्यातिशयानुकम्पया ॥ ५९ ॥

किमम्ब सत्यं न नगेन्द्रसम्भवे
भवे भवानीति सकृद्वदेत्तु यः ।
करोपि कारुण्यकटाक्षमालया
लयात्तमुद्धृत्य जयश्रियान्वितम् ॥ ६० ॥

त्वया विमुक्तः किल सत्यवान्यमा-
यमाद्युपायैः कृशतामुपेयुषीम् ।
अनेन नित्यं सह धर्मचारिणीं
विचारिणीं वीक्ष्य जगच्छरण्यया ॥ ६१ ॥

त्वमप्यहो मय्यधुनाम्ब निर्दया
दयार्द्रचित्तेति कथं त्वमुच्यसे ।
इति ब्रुवन्नेव पपात मूर्च्छितः
क्षितौ भवेत्कुत्र गतौजसो गतिः ॥ ६२ ॥

जगच्छरण्यं हृदि चिन्तयन् शिवं
शिवे तथा पश्यति रक्तलोचनैः ।
अभूच्छयानः कुरुनन्दनो महान्
महात्मनैवं प्रगृहीतविक्रमः ॥ ६३ ॥

क्षताङ्गमेनं रुधिराप्लुतोरसं
रसातले तं पतितं विलोकयन् ।
अनर्घशीलं प्रथितं प्रियं जनं
जनः कथं न द्रवतीह चिन्तया ॥ ६४ ॥

प्रपञ्चमाता दयया द्रवीकृता
कृतान्तपाशे पतितं व्यलोकयत् ।
उमा निरुत्साहममुं विचेतनं
सचेतनं पार्थमथाकरोत् दृशा ॥ ६५ ॥

तदैव पार्थः पुनरुत्थितो भुवो
भुवो यथा शुष्कतरुः सुवृष्टिभिः ।
विरच्य भूमौ सहसा मृदा हरं
हरं स मेजे परिपावितात्मना ॥ ६६ ॥

व्रजन् शरण्यं शरणं गुणोत्तम-
स्तमार्द्रवाचा मनसा च कर्मणा ।
सुवृत्तवान्सज्जनदुःखदुःखितं
प्रदुःखितः पूजयितुं प्रवृत्तवान् ॥ ६७ ॥

नतस्य बन्धुर्नतरक्षको भवा—
न्भवेन्ममाप्यद्य करावलम्बनम् ।
ममापि सौख्यं सुजनप्रियंकरः
करोतु शम्भुः करुणाकरोऽस्ति चेत् ॥ ६८ ॥

कदापि चिन्ता मरणे न मे ध्रुवं
ध्रुवं यशस्यस्त्यधुना तदाविलम् ।
वने निषादेन शशादिना विना
विना प्रयासं विजयः पराजितः ॥ ६९ ॥

इति स्मरन्पापहरं नरोत्तम-
स्तमर्चयन्नश्रुजलाविलेक्षणः ।
शिवे स मारं कुसुमस्रजा समं
समर्प्य दध्यौ हरमिन्दुशेखरम् ॥ ७० ॥

उन्मील्य चक्षुरवलोक्य किरातकण्ठे
बिम्बे हरस्य विजयेन समर्पितां ताम् ।
पुष्पस्रजं भृशमसावतिविस्मितोऽभू-
दासाद्य चोवमपतच्च निपादपादे ॥ ७१ ॥

प्रक्षालितौ नयनबाष्पजलैस्तदीयैः
श्रेयस्करौ भयहरौ शिववन्द्यपादौ ।
साम्बोऽपि मङ्गलकराशुभिरभ्यपिञ्च-
त्सौभाग्यदायिपदपावितपार्थशीर्षम् ॥ ७२ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
द्वितीयः सर्गः ॥

## तृतीयः सर्गः

निजाङ्घ्रिशरणयोः पार्थं पतितं तं तथाविधम् ।
भक्तं भक्तप्रियः शम्भुर्वभाषेदं समुद्धरन् ॥ १ ॥

उत्तिष्ठानघशील त्वमुत्तिष्ठ विजयानघ ।
अलं ते तपसा सौम्य प्रीतोऽहं चरितेन ते ॥ २ ॥

संवृत्तोऽस्यधुना पार्थ सम्यक् निर्धूतकल्मषः ।
शरदाकाशवच्छुभ्रं शोभते हृदयं तव ॥ ३ ॥

तवाचञ्चलया भक्त्या तपोभिर्विहुभिस्तथा ।
भृशं रोमाञ्चिताङ्गस्य मनो मे सुवशीकृतम् ॥ ४ ॥

उन्मील्य चक्षुषी मह्यमुमां मां पितरौ च ते ।
पार्थ स्वरूपिणौ लोकपितरौ पश्य शंकरौ ॥ ५ ॥

श्रुत्वा सौभाग्यकर्त्रीं तां वाचं पीयूषनिर्भराम् ।
उत्थाय शंकरं दृष्ट्वा विस्मितोऽभूत् धनंजयः ॥ ६ ॥

चन्द्रमौलिं ललाटाक्षं नीलकण्ठं जटाधरम् ।
भस्मोद्धूलितसर्वाङ्गं सर्पाभरणभूषितम् ॥ ७ ॥

मन्दस्मितं कृपासिन्धुं मङ्गलाकृतिमर्जुनः ।
उमया सह देवेशमद्राक्षीत्सुन्दरं परम् ॥ ८ ॥

अर्कोदये तडागान्तः पद्मानीव शिवोदये ।
धनंजयस्य हृन्नेत्रमुखाब्जानि चकाशिरे ॥ ९ ॥

यथा तथोलबीजौ तौ तथा कौन्तेयशंकरौ ।
परस्परं समाकृष्टौ यथाऽयस्कान्तसूचिके ॥ १० ॥

यमुद्दिश्य तपस्तेपे तं दृष्ट्वा पुरतः शिवम् ।
वाचः पार्थमुखादित्थं सहसैव विनिर्गताः ॥ ११ ॥

त्वमेवाखिलजन्तूनां परित्राणपरायणः ।
शम्भो कथं ब्रवीमि त्वद्व्याजकरुणां मयि ॥ १२ ॥

गङ्गाधर ललाटाक्ष गतिस्त्वं सर्वदा मम ।
चन्द्रमौले कृपाराशे त्राहि मां शरणागतम् ॥ १३ ॥

अज्ञानादेव देवेश कृतोऽयमतिसाहसात् ।
क्षम्यतामपराधो मे दयासिन्धो दयां कुरु ॥ १४ ॥

कुसुमैरर्चिते गात्रे पूज्यैरपि सुपूजिते ।
मूढात्मना मया शम्भो क्षिप्तान्यस्त्राण्यनेकशः ॥ १५ ॥

सामगानादिभिःस्तुत्यं कृत्वाभिरमर्त्यसंयम् ।
निर्लज्जोऽहमिह स्थातुं नार्होऽस्मि पुरतस्तव ॥ १६ ॥

क्षमस्व मां तथापि त्वं कं यामि शरणं वद ।
कारुण्यवारिधे शम्भो पश्य मां शरणागतम् ॥ १७ ॥

दशतीपयदि शिशुः स्तन्यपानान्तरे स्तनम् ।
न किं तस्यापराधोऽयं जनन्या क्षम्यते प्रभो ॥ १८ ॥

अर्भको यदि पादाभ्यां प्रहरत्यानने पितुः ।
क्षम्यते भगवन्पित्रा किं न तद्बालचापलम् ॥ १९ ॥

नाहं जाने स्वरूपं ते नापि सौन्दर्यसम्पदम् ।
अयं लीलाविनोदस्ते कथं वर्ण्यो महामते ॥ २० ॥

अनन्तो नान्तमेति त्वच्चरितामृतवर्णने ।
अनलश्चानलोभूच्च तेजसा तुल्यतेच्छया ॥ २१ ॥

सदानन्दमयं वन्दे सुन्दराङ्गमनामयम् ।
महतां च महान्तं त्वां जगत्कारणकारणम् ॥ २२ ॥

गङ्गां धत्से शिरःकोटयामयं क्षालयितुं मदा ।
आर्त्तेभ्यः सुखमादातुं तथा मौलौ सुधाकरम् ॥ २३ ॥

दुष्टान्दाहयितुं धत्से ललाटे वह्निलोचनम् ।
तवास्ति नयनद्वंद्वं धर्मिष्ठान्वीक्षितुं विभो ॥ २४ ॥

दीनान्सान्त्वयितुं वाग्भिर्वहसि त्वं महाननम् ।
आश्लेषणाय भक्तानां हस्ताः सन्ति महाप्रभो ॥ २५ ॥

भिक्षाकपालमाधत्से याचितुं न कदाचन ।
धनवन्तं तथा कर्तुं यथा स धनदो भवेत् ॥ २६ ॥

सतां तत्त्वोपदेशार्थे धार्यते डमरुस्त्वया ।
भक्तार्तिभञ्जनायैव त्वया शूलं च धार्यते ॥ २७ ॥

भक्तानामाश्रयौ स्यातां ते पूज्यचरणौ ध्रुवम् ।
अलीनां च कृते नूनं जायते सरसीरुहम् ॥ २८ ॥

त्वच्छिरः स्पर्शमात्रेण जाह्नवी पाविताऽभवत् ।
लोकान्पावयितुं शक्ता तस्मादेव महापगा ॥ २९ ॥

पार्वती प्राविशच्छक्तिप्रयोगार्थं वपुस्तव ।
त्वन्नेत्रेणैव वह्निस्तु दग्धवान् रक्षसां पुरीः ॥ ३० ॥

रजतं वामनेत्राच्च फालनेत्राच्च काञ्चनम् ।
जायत इत्यहं जाने रत्नं दक्षिणचक्षुषः ॥ ३१ ॥

कान्तशक्तिरयोखण्डाद्यथा खण्डान्तरेषु सा ।
पराशक्तिस्तथा त्वत्तः प्रसरत्यन्यजन्तुषु ॥ ३२ ॥

जिता सम्मोहनास्त्रेण पाण्डयपुत्री त्वया पुरा ।
या षोडशवयस्यैवाजयद्दिक्पालकानपि ॥ ३३ ॥

त्वद्धामपादमासाद्य मार्कण्डेयं महामतिम् ।
भक्तावतंसमवितुं भवानी प्राहरद्यमम् ॥ ३४ ॥

तस्मात्त्वच पदाम्भोजं देहि मे परमेश्वर ।
जयामि खलु शत्रून्मे यन्निवेश्यास्मचेतसि ॥ ३५ ॥

पङ्कजं पङ्कजं दृष्ट्वा कथं विकसति प्रभो ।
भवत्पदाम्बुजं दृष्ट्वा प्रफुल्लं मे हृदम्बुजम् ॥ ३६ ॥

को वा जानाति हे शम्भो तव रूपं यथार्थतः ।
भवान्येव विजानाति तव वामार्धसंश्रयात् ॥ ३७ ॥

सहोदराश्च मे सर्वे कुरवश्च तथाऽपरे ।
तव देहसमुद्भूता इति वेद्मि महेश्वर ॥ ३८ ॥

तस्मादेव न मे शत्रुर्लोकेऽस्मिन्विद्यते क्वचित् ।
किमर्थं धार्यते शस्त्रं कथं योत्स्ये च बान्धवान् ॥ ३९ ॥

राज्ये वापि जये वापि कीर्तौ वा च धनेऽपि वा ।
न तृष्णा मे तथा शम्भो पदाम्भोजे यथा तव ॥ ४० ॥

तद्देहि ते पदद्वंद्वं गरीयो मोक्षतोऽपि यत् ।
निधने मे परानन्दं यदि तन्न प्रयच्छसि ॥ ४१ ॥

इति भक्त्या प्रमन्पार्थः पार्वतीपतिपादयोः ।
प्रमत्तालिरिवाम्भोजे पपात सहसा महान् ॥ ४२ ॥

इदमर्थयुतं वाक्यं निशम्य हृदयस्पृशम् ।
स्नापयामास कौन्तेयं द्रवीभूतहृदा हरः ॥ ४३ ॥

तमुत्थाप्य महादेवः परिष्वज्य च वक्षसा ।
अपि चाघ्राय मूर्धानमाचख्यौ विजयं वचः ॥ ४४ ॥

प्रीतोस्म्यतीव ते वत्स तपसा सत्यविक्रम ।
आगतोऽस्मि वरं दातुं तुभ्यं यद्रोचते फलम् ॥ ४५ ॥

यथा नारायणं कृष्णं तथा त्वां नरमित्यहम् ।
जाने जनहितायैव जाताविति युवां भुवि ॥ ४६ ॥

नारायणसहायोऽभूः पूर्वदेहे परंतप ।
अधुना ते सहायोऽस्ति कृष्णरूपी जनार्दनः ॥ ४७ ॥

मायामास्थाय गाण्डीवं मया ग्रस्तं महाधनुः ।
पन्नगाभेयबाणाश्च तूणौ चाक्षयसायकौ ॥ ४८ ॥

भविष्यन्ति यथापूर्वं पुनः सर्वाण्यमूनि ते ।
नीरुजश्चापि भूयास्त्वं हनिष्यस्याततायिनः ॥ ४९ ॥

उमाप्रार्थनया पार्थ तपःशक्त्या च ते तथा ।
शान्तिमाप्तोऽहमधुना पश्य मां सौम्यरूपिणम् ॥ ५० ॥

न वीरो मानुषे लोके नासुराणां कुले तथा ।
न चास्ति देवलोकेऽपि त्वत्समानपराक्रमः ॥ ५१ ॥

पुरा वदति कृष्णस्त्वां स्वधर्मानतिविस्तरम् ।
सर्वधर्मपरित्यागः कदा कार्यश्च मानवैः ॥ ५२ ॥

यावत्प्रकाशते सूर्यो यावच्चन्द्रोऽपि राजते ।
तावद् गुणौघकीर्ती ते स्थास्यन्ति वसुधातले ॥ ५३ ॥

तथा चरसि धर्मं त्वं यथा ते चरितं ध्रुवम् ।
उपदेशाय कल्पेत महतां धर्मिणामपि ॥ ५४ ॥

संघर्षणाद्यथा स्वर्णं समेत्यतितरां प्रभाम् ।
सुतरां शोभसे पार्थ युद्धादस्मात्तथाऽधुना ॥ ५५ ॥

एतत्पाशुपतास्त्रं ते ददाम्यद्य मुदा वरम् ।
परीक्ष्यैव वरं सम्यक् मुदा दद्यात्सुतां पिता ॥ ५६ ॥

प्रयोक्तव्यं त्वया तन्न मानुषीषु कदाचन ।
स्थाने खलु प्रयोक्तव्यमिति विद्धि धनंजय ॥ ५७ ॥

धारणे च तथा मोक्षे संहारेऽपि परंतप ।
अर्हसि त्वं महास्त्रस्य मन्त्रशक्तिप्रभावतः ॥ ५८ ॥

ध्रुवं भौमफलान्येव यन्त्रैराप्नोति मानवः ।
तथा गन्तु स यन्त्रैस्तु शक्नोति विधुमण्डलम् ॥ ५९ ॥

मन्त्रेण तु पुमान्नत्यं सर्वमेवाधिगच्छति ।
तस्मादस्त्रेण सार्धं ते तन्मन्त्रं च ददाम्यहम् ॥ ६० ॥

इति ब्रुवन्समन्त्रं तद्विजयाय महेश्वरः ।
अमोघशक्तिसंमन्नमस्त्रं पाशुपतं महत् ॥ ६१ ॥

पार्श्वे पाशुपतास्त्रस्य चकाशे भृशमर्जुनः ।
भवानीदत्तया शक्त्या विशाखः शोभते यथा ॥ ६२ ॥

अग्निर्यमश्च दिक्पालास्तथेन्द्रवरुणादयः ।
तस्मिन्नवसरे तत्र पार्थं द्रष्टुं समागताः ॥ ६३ ॥

धीरं महास्त्रसंसिद्धावमुं श्लाघयितुं तथा ।
अनुग्रहीतुमेवासीत्तेषामागमनं तदा ॥ ६४ ॥

वरो विवाहवेलायां चकास्तीव नवोढया ।
नवास्त्रग्रहणे पार्थः शोभतेस्म नवाभया ॥ ६५ ॥

ववर्षुः कल्पपुष्पाणि सहर्षं निर्झरास्तदा ।
अनृत्यंश्च महानन्दरसेनाप्सरसः स्वयम् ॥ ६६ ॥

अथः सिंहासनाद्धूर्तः पपात स सुयोधनः ।
वामेतराक्षि पस्पन्दे पत्न्यास्तस्य च दुर्मतेः ॥ ६७ ॥

तदाऽस्पन्दत पाञ्चाल्याः वामाक्षि शुभसूचकम् ।
सूचयन्ति निमित्तानि प्रागेवागामिसम्भवम् ॥ ६८ ॥

अस्त्रप्रदानवेलायां सर्वाशाः सर्वमङ्गलाः ।
शंखदुन्दुभिभेरीणां घोषैर्मुखरिता बभुः ॥ ६९ ॥

चचाल पृथिवी किंचित्सकानननदीद्रुमा ।
विकिरन्ति स्म पुष्पाणि तरवोऽपि तदा वने ॥ ७० ॥

पशुपक्षिमृगादीनां शुभारवपुरःसरम् ।
प्लवनादिप्रकटनैर्दृष्टमामोदचेष्टितम् ॥ ७१ ॥

अनुगृह्य गुडाकेशं पश्यत्येव परंतपे ।
अर्कवज्जीवलोकेषु पश्यत्स्वन्तर्दधे प्रभुः ॥ ७२ ॥

अथ पार्थाय धन्याय प्रदातुं पारितोषिकम् ।
आशापस्तत्रुपाजग्मुर्धर्मराजमुखाः स्वयम् ॥ ७३ ॥

दक्षिणां दिशमास्थाय प्रादादस्मै यमस्तदा ।
दिव्यमस्त्रं तु पार्थाय दण्डमप्रतिवारणम् ॥ ७४ ॥

प्रयोगादेव संख्ये दण्डानामयुतानि तत् ।
हरन्ति सहसा यानि प्रयुतान्याततायिनाम् ॥ ७५ ॥

पश्चिमां दिशमास्थाय वरुणोऽपि वरं ददौ ।
तस्मै तस्मिन् शुभे काले वारुणास्त्रं महाद्युति ॥ ७६ ॥

प्रयुक्ते विधिवत्तस्मिन् सते पाशान् सहस्रशः ।
ये बध्नन्ति परान्सर्वान् क्षिप्रमेव प्रमाथतः ॥ ७७ ॥

उत्तरस्यां दिशि स्थित्वा धनाध्यक्षो धनंजयम् ।
अनुगृह्य ददावस्त्रं क्षत्रराजाय यक्षराट् ॥ ७८ ॥

ओजस्तेजो धृतिं चैव प्रभां नेत्राभिघातिनीम् ।
अवाप्यानेन मर्त्योऽपि दुर्जयानपि जेष्यति ॥ ७९ ॥

शक्रः शच्या सह क्षिप्रमाजगामार्जुनान्तिकम् ।
श्वेतद्विपाधिरूढोऽपि स्तूयमानो महर्षिभिः ॥ ८० ॥

पूर्वामाशाममरपतिरास्थाय शच्या समेतः
स्नेहादूचे वचनममृतं गाढमाश्लिष्य पुत्रम् ।
साक्षात्साम्बं विजय तपसा तोषयित्वा महान्तं
प्रीत्या तस्मादिदमलभथास्त्वं महास्त्रं महेशात् ॥ ८१

श्लाघ्यैः श्लाघ्यो भवसि बहुमान्यश्च मान्यैः सदा त्वं
यस्माज्जातः पशुपतिवपुःस्पर्शमात्रेण दिव्यः ।
अर्होऽसि त्वं सुरवसतिमागन्तुमस्मात्प्रदेशा-
त्तस्मादेहि प्रियसुत शुभं स्वं सुराणां निवासम् ॥ ८२

आयाति त्वाममरवसतिं मातलिर्नेतुकाम-
स्तस्मात्सज्जो भव सुरपुरीं यातुमद्यैव पार्थ ।
द्रष्टव्यास्ते सुरनगरसौभाग्यरम्यप्रदेशा-
स्तत्रैवास्त्राण्यहममितशक्तीनि दास्यामि तुभ्यम् ॥

एवं स्नेहाद्विजयविजये पारितोषाणि दत्त्वा
सम्मान्यैनं वसतिमगमन्मान्यदिक्पालकास्ते ।
स्वीकृत्यासौ सविनयममून्यस्त्रवृन्दानि तेभ्यः
स्मारं स्मारं स्तिमितनयनस्तान् तदा तत्र तस्थौ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये
महाकाव्ये तृतीयः सर्गः ॥

—:*:—

## चतुर्थः सर्गः

अत्यद्भुतां शुभकरीं शिवशक्तिलीलां
  भक्तेष्वतुल्यकरुणापवनापविद्धाम् ।
वृत्तिं च सम्यगनुचिन्त्य सुरेन्द्रसूनु-
  र्मेने स्वकृत्यमपि कृत्यविदात्मनीत्थम् ॥ १ ॥

मय्यर्भके करुणया स्वयमापतन्तौ
  बाह्यान्तरान् रिपुगणान्सहसा हरन्तौ ।
भक्ताय नित्यमभिवाञ्छितमाहरन्तौ
  तावेव नित्यमखिलैरभिवन्दनीयौ ॥ २ ॥

शर्वया किरातवपुषाऽनुजगाम दैत्यं
  वन्यं वराहहतकं हतवान्महेशः ।
कोपं परीक्ष्य च वरं नियतं प्रदातुं
  शम्भुस्तदा शितवचोभिरभर्त्सयन्माम् ॥ ३ ॥

पूर्वं किरातवपुषातिरुषा समेत्य
  पश्चाद्यथार्थवपुषा ददतो वरं मे ।
मन्ये मदर्थमिति तां भवशक्तिलीलां
  पित्रोः सुतेषु करुणा महतीति सत्यम् ॥ ४ ॥

गर्वं तथा मम समस्तबलं च युद्धे
  हृत्वैव पाशुपतमस्त्रमदाद्गुरो मे ।
आनन्दपूरितमिवाद्य ममास्ति चित्तं
  जानन्ति सुष्ठु हि रुचिं क्षुधया रसज्ञाः ॥ ५ ॥

शक्तिप्रवाहजनितः शिवयोः प्रपञ्चः
  शक्तिप्रवाहलयनं किल तद्विनाशः ।
शक्तिः समाविशति पीलुसुयोजनार्थे
  स्रष्टुं प्रपञ्चमखिलं वपुरेव शम्भोः ॥ ६ ॥

लज्जां विना प्रतिवचोभिरहं महेशं
  बाणैस्तथा सुचिरमर्दितवाञ्छिताभिः ।
तस्माच्छमेत मनुजो भृशमात्मशक्तिं
  योद्धुं च तं त्रिभुवनेष्वपि कोऽस्ति शक्तः ॥ ७ ॥

मा गर्वमाप्नुहि सुयोधन राज्यलोभा-
  द्दुःशीलदुःखकरमातुलनेयबुद्धे ।
उन्मत्त मा भ्रम सदा भ्रमरस्य योगा-
  द्दूयासि पङ्कज निशाकरमेव शीघ्रम् ॥ ८ ॥

हा धूर्त मान्यमहतां सविधे सभायां
  लज्जां विना त्वमकरोः किल हीनकृत्यम् ।
दुःशासनात्तवतनुपा शठ शासितुं त्वां
  कश्चित्पुमांस्तव कृतान्त इव प्रयातः ॥ ९ ॥

त्वं श्रोत्रपेयमचिराच्छृणु शाश्व वाक्यं
  हा द्रौपदि प्रियतमे प्रियवल्लभाचे ।
आगच्छति प्रियवचोभिरमी सुधांशु-
  र्ज्योतिष्मतीं कुमुदिनीं महसा दिदृक्षुः ॥ १० ॥

धन्योऽहमद्य सुतरां शिवयोः प्रसादा-
यावद् विलोकयति मामिह भाग्यलक्ष्मीः ।
चक्रं यथा भ्रमति वर्त्तितयन्त्रशक्त्या
भाग्यं तथा प्रचरतीदमदृष्टशक्त्या ॥ ११ ॥

मह्यं प्रदाय चरमद्य महाप्रभावाः
दिक्पालका अपि तथा बहुधा प्रशस्य ।
आशीर्वचोभिरभिवर्ध्य तु मां महान्तो
जग्मुः स्वयं स्वनिलयं शिवशासनाच्च ॥ १२ ॥

स्नेहादहं करुणयाऽतितरङ्गिताभ्यां
दृष्टः शिवेन महताद्य विलोचनाभ्याम् ।
स्पृष्टश्च दिव्यवपुषा किल सानुकम्प-
मालिङ्गितो मुहुरहं सुदृढं कराभ्याम् ॥ १३ ॥

हे भ्रातरोऽहमधुना शिवयोः प्रसादा-
च्छक्तिं श्रियं च विविधास्त्रसमुच्चयं च ।
संप्राप्तवान्बहुमतिं च दिशांपतीना-
माशीर्वचांसि जयसूचकदर्शनं च ॥ १४ ॥

अस्मद्विधेषु कथयाद्य कथंप्रकारं
वर्ण्यः पितामह तवेदृशपक्षपातः ।
वात्सल्यबुद्धिरधुना तव वातकाना-
मस्माकमस्ति भुवि नूनमनभ्रवृष्टिः ॥ १५ ॥

मां मातलिर्झटिति दिव्यजनाधिवास-
मायाति नेतुमिह दिव्यरथेन सार्धम् ।
गच्छेयमेव सुरलोकमहं नियोगा-
ज्जाने ध्रुवं तदपि तस्य महाप्रभावात् ॥ १६ ॥

स्वस्थैः प्रशंसित इहैवमहं महद्भिः
स्वस्याधिवासजगदीश्वरदत्तशस्त्रः ।
स्वस्थोऽप्यहं हृदि तथापि भवामि नूनं
स्वस्थो न तु प्रियवहोदरचिन्तया मे ॥ १७ ॥

धर्मोत्तम त्वमसि सत्यमजातशत्रुः
धूर्तैः परं सुमहतां पुरतः सभायाम् ।
दुर्योधनप्रभृतिभिस्तु कृतो निकारः
भ्रातः कथं कथय तं प्रसहेय वीरः ॥ १८ ॥

राधेय मां प्रति तवोद्यममद्य कर्ण
जानीहि तद्भवति नाशकृते तवैव ।
जानासि रात्रिशलभा मुहुरग्निजिह्वां
जानन्त एव निजनाशकृते विशन्ति ॥ १९ ॥

यावद्विचिन्तयति कुन्तिसुते हृदीत्थं
तावत्सविस्मयमपश्यददृष्टपूर्वाम् ।
रम्याकृतिं स गगने किल पूर्वभागे
बालार्ककान्तिमिव काञ्चन काञ्चनाभाम् ॥ २० ॥

ज्योतिष्पथेन ह्यमानविमानशब्दं
श्रुत्वा विलोचनयुगं स तु वर्तयित्वा ।
पश्यन्विमानमपि तद्दिशि दीर्घनेत्र-
स्तस्थौ तथैव सुमुहूर्तमनन्यदृष्टिः ॥ २१ ॥

वज्रेण वृत्रमिव मेघकुलं तु भित्वा
वेगादमाववतरन्भुवमभ्रवृन्दात् ।
तन्वन्प्रकाशमखिलासु च दिक्षु कान्त्या
विद्युल्लतेव विरराज विमानराजः ॥ २२ ॥

नादैर्विमानरथकाञ्चनकिङ्किणीनां
सम्यक्तदा मिलितपक्षनिनादरम्यैः ।
फूत्कारशब्दनिवहैरिव पन्नगाना-
मापूरिता दशदिशोपि विमानशब्दैः ॥ २३ ॥

उच्चैःश्रवःप्रमुखवाजिभिरुह्यमानं
मायामयं नभसि नेत्रमुपं ज्वलन्तम् ।
ऐन्द्रं रथं हरितपिङ्गलनीलवर्णै-
रग्रे ददर्श विलसन्तममुं प्रकाशैः ॥ २४ ॥

नीलोत्पलाभसदृशं ध्वजमस्य नीलं
वंशं तथा कनकभूषणमस्य केतोः ।
रत्नैर्वलीषु खचितं निवहैर्मणीनां
पार्श्वे च दर्पणमनेकमसौ ददर्श ॥ २५ ॥

वैडूर्यरत्नखचितैः स तु पक्षतीनां
तैस्तैर्विशालपटलैरुपशोभ्यमानः ।
प्रान्तेषु पार्श्वदलयोरपि पूर्वभागे
चक्रैर्भ्रमद्भिरतिचारुतया चकाशे ॥ २६ ॥

सर्वं रथे कनकमण्डनमण्डिताङ्गं
मन्त्रैर्दयानिव रथं च नियन्त्रयन्तम् ।
पार्थस्तु मातलिमचञ्चललोचनाभ्यां
पश्यन्तमेव सुरसूतमतर्कयत्सः ॥ २७ ॥

आयान्तमेनमतिशीघ्रगतिं समीक्ष्य
दिव्यं तमिन्द्ररथमित्यनुमाय पार्थः ।
तत्र क्षणं स्तिमितलोचन एव तस्थौ
सुष्ठु स्मरन् प्रियवचो हृदि वासवीयम् ॥ २८ ॥

संगृह्य वेगमथ दिव्यमहाविमान-
स्तस्थौ पुरन्दरसुतस्य समीपमेत्य ।
चामीकराभवपुषा स विराजमान-
स्तत्स्यन्दनादवततार सुरेन्द्रसूतः ॥ २९ ॥

किंचित्क्षणं विजयमेव विलोक्य शूरं
गाण्डीविनं तमनुमाय स दीर्घदर्शी ।
सप्रश्रयं कृतशिरोञ्जलिरायताक्ष-
मूचे वचांसि मधुराणि महान्ति सूतः ॥ ३० ॥

स्पर्शेन शम्भुवपुषा त्वमवाप्तवांस्त-
द्दिव्यात्मकं कनकगात्रमभानुपीयम् ।
तस्मान्मयाद्य सुतरां सुरलोकमेतुं
द्रष्टुं त्वमर्हसि सुरानपि दीर्घबाहो ॥ ३१ ॥

शक्रात्मज प्रियपिता तवदेवराज-
स्त्वां द्रष्टुमिच्छति सुरैः सह देवलोके ।
तत्त्वां नयामि सुरलोकमहं महात्म-
न्नारोह शीघ्रमथ दिव्यविमानमेनम् ॥ ३२ ॥

पार्थेष्वरिंदम शतक्रतुरतीव तुष्टः
सन्त्येव धर्मनिरताः सततं यतस्ते ।
माहात्म्यमद्य विजय त्वमवेहि धीर
धर्मस्य धर्मगतिमप्यमितप्रभाव ॥ ३३ ॥

देवोऽप्यधर्मचरणादध एव याति
मर्त्योऽपि धर्मचरणादमरत्वमेति ।
काकोऽभवत्सुरसुतोऽपि जयन्त इत्थं
धर्मात्त्वमद्य सुरलोकमितः प्रयासि ॥ ३४ ॥

यत्कर्म मङ्गलकृते भवतीतरेषां
तत्कर्म धर्म इति धर्मविदो वदन्ति ।
भानुः सुधांशुरपि साधुजनाश्च नित्यं
तिष्ठन्ति मङ्गलकृते भुवने जनानाम् ॥ ३५ ॥

धर्मान्नरो जगति विन्दति दीर्घमायुः
श्रेयश्च धर्मचरणात्पुरुषैः सुलभ्यम् ।
अस्मिंश्च जन्मनि सुखं परमं स्वधर्मै-
र्जन्मान्तरेऽपि च तथा लभते मनुष्यः ॥ ३६ ॥

सत्येन धर्मचरणादचिरात्तु मर्त्यो
नैष्कर्म्यमेव लभते परमात्मबोधम् ।
ज्ञानं विशुद्धहृदये समुदेति पश्चा-
द्यात्येव शाश्वतसुखं स्वयमेव तस्मात् ॥ ३७ ॥

व्यासः स एव किल धर्मनिबन्धिनीना-
मग्रेसरो भवति मान्यपितामहस्ते ।
धर्मात्मजोऽस्ति तव धर्महितोपदेष्टा
न स्यात्कथं कथय भो तव धर्मचिन्ता ॥ ३८ ॥

शक्तो न वक्तुमिह धर्ममहं सुदीर्घं
धर्मोपदेशमचिरात्स पुरा करोति ।
सत्यं स्वधर्ममधिकृत्य च कृष्णरूपी
विष्णुर्वदिष्यति गदाधर एव साक्षात् ॥ ३९ ॥

तिष्ठत्यसौ सुरगणैः सह देवराजो
गन्धर्वसिद्धमुनिभिश्च तथाप्सरोभिः ।
संसेव्यमान इह एव महाप्रभावः
पश्यन्पिता दिवि तवागमनं प्रतीक्ष्य ॥ ४० ॥

सर्वे च ते सुरगणाः सुरलोक एव
त्वां द्रष्टुमद्य मिलिताः सुरराजधान्याम् ।
यं यं प्रसादयति मान्यजनं स्वदेवः
तं तं प्रजाश्च सुतरां बहुमानयन्ति ॥ ४१ ॥

दिव्याङ्गनाभिरनिशं दिवि गीयमानं
त्वां पाकशासनसमानशरीरकान्तिम् ।
तत्र स्वपुत्रमभिनन्द्य सहस्रनेत्र-
स्तुभ्यं प्रदास्यति शरान्बहुमानपूर्वम् ॥ ४२ ॥

तस्माद्धनंजय मया सह दिव्ययान-
मारोह सुन्दरमिदं तु विना विलम्बम् ।
स्वर्गाच्च निर्झरगणैर्बहुमानितः सन्
सार्धं मयैव पुनरेष्यति लब्धशस्त्रः ॥ ४३ ॥

इत्युक्तवन्तममराधिपसारथिं तं
प्रत्युक्तवान्प्रियवचोभिरनर्घशीलः ।
आप्यायितोऽस्मि वचनामृतधारया ते
देवः किमन्यदमृतेन विना प्रदद्यात् ॥ ४४ ॥

अप्राप्यमेव तपसा बहुराजसूयैः
यज्ञैः शतैरपि शतक्रतुदिव्ययानम् ।
मान्यैर्महद्भिरपि देवगणैरवर्ण्यं
दिव्यप्रभावमिदमित्यहमद्य जाने ॥ ४५ ॥

आखण्डलस्य यमनिर्वचनीयशोभं
मर्त्याश्च दानवगणाश्च तथेतरे च ।
स्प्रष्टुं न वीक्षितुमपि प्रभवन्ति देव
पश्यामि तादृशरथं महनीयमग्रे ॥ ४६ ॥

प्रस्थानयोग्यसमये प्रियमिन्द्रकीलं
यस्मिन्नहं सुचिरमेव तपांसि तप्त्वा ।
सौख्येन कालमनयं गिरिराजमेन-
माप्रष्टुमद्य हृदयं भृशमीहते मे ॥ ४७ ॥

तस्मात्सखे त्वमधिरोह विमानमादौ
त्वां देव शीघ्रमनुसर्तुमहं तु पश्चात् ।
आरोहयेयमिति मे मनसोऽभिलाषः
नेता हि गच्छति सदा पुरतः प्रजानाम् ॥ ४८ ॥

आप्रष्टुमद्रिवरमिन्द्रसुताय सूतः
सद्यः प्रियादनुमतिं समयच्छदस्मै ।
सोऽप्यन्वभुङ्क्त विजयन्तु सुखं नवीनं
यत्नो हि नूतनसुखं सफलेन दत्ते ॥ ४९ ॥

आमोदवारिणि ततः सुखमाप्लुतः सन्
स्नात्वा यथाविधि पितॄन्स तु तर्पयित्वा ।
आनन्दरूपमखिलेश्वरमिन्दुचूड-
मूर्ध्वे विलोक्य समचिन्तयदूर्ध्वगामी ॥ ५० ॥

यातामनन्तरमनन्तगुणाभिरामं
तं मर्मभेदिमिरुपाक्रमताऽर्जुनोऽयम् ।
आप्रष्टुमद्रिवरमार्द्रवचोभिरित्थं
शिष्यो यथा गुरुवरं समुपात्तविद्यः ॥ ५१ ॥

अद्यापि शैलवर शीलवतां निवासं
त्वां साधवः सुकृतिनश्च समाश्रयन्ते ।
माङ्गल्यभूमिरसि सन्ततमद्रिनाथ
त्वं स्वर्गलोकगमनाय च मार्गदर्शी ॥ ५२ ॥

पीत्वा यथेष्टमिह निर्झरनिर्मलाम्बु
स्नात्वा सुखं तव सरित्सलिलेषु नित्यम् ।
स्नेहादहं सुचिरमध्यवसं तवाङ्कं
नाहं सहे नगपते नवविप्रयोगम् ॥ ५३ ॥

त्वत्संश्रयान्मुनिजनाश्च तथेतरे च
शीघ्रं फलान्यनुभवन्तु गतव्यथास्ते ।
श्लाघ्यैर्वचोभिरनिशं तवधर्मबुद्धि-
मुद्घोषयन्तु दिवि देवगणाः सहर्षम् ॥ ५४ ॥

सानन्दमेव शिखरे तव भूरुहाणां
पुष्पोच्चयेभ्य इह पल्लवसङ्गतेभ्यः ।
आघ्राय सौरभमनेकदिनानि नीत्वा
त्वद्विप्रयोगमतिदुःसहमद्य याचे ॥ ५५ ॥

रम्याण्यनेकशिखराणि तथा वनानि
मानौ सलीलमिह ते सलिलप्रवाहान् ।
स्वच्छन्दमेव निवसन्सरितस्तटेऽस्मिन्
दृष्ट्वा कथं प्रियसखे प्रभवामि गन्तुम् ॥ ५६ ॥

इच्छानुसारसुलभं च महीरुहाणां
स्वादूनि नित्यमिह पक्वफलानि भुक्त्वा ।
ध्यायन्नहं प्रकृतिसुन्दर सुन्दरेशं
बह्वीः क्षपाः क्षपितवान् तव भूप्रदेशे ॥ ५७ ॥

विस्रब्धमर्भक इवाङ्कतले जनन्याः
गात्रं निवेश्य तव रम्यशिलातलायाम् ।
धर्मोत्तमास्वपमनेकनिशास्त्विदानीं
नाहं सहेऽद्य तव दुःसहविप्रयोगम् ॥ ५८ ॥

हंसध्वनिं सुभगमम्बुजपल्वलेषु
कुञ्जेषु मञ्जुतममण्डजकूजनं च ।
इत्थं बहून्बहुविधांश्च निशम्य शब्दान्
त्वत्तः प्रयातुमहमद्य कथं नु शक्तः ॥ ५९ ॥

सौरभ्यमेष सरसीरुहपल्वलाना-
मादाय ते सुमनसामपि सङ्गमेन ।
शैत्यं तथाऽद्रिवर निर्झरशीकराणां
मन्दानिलो मम हिताय च वाति नित्यम् ॥ ६० ॥

इत्थं ददासि मनसे निखिलेन्द्रियैर्मे
प्रीतिं त्वमेव महतीं किल सम्पदा ते ।
आदाय वित्तमखिलं स्वपितुः सकाशा-
त्को यातुमर्हति पुमान्पितरं विहाय ॥ ६१ ॥

दध्युस्ते दृढगात्रतामिति नदी मातेव शंसत्यसौ
श्लाघ्येरन्नमराः सदेति पितृवद्धंसो वदत्यत्र माम् ।
वल्लीयं स्तबकान्विता वदति मां मा विस्मरेति प्रियां-
त्यक्त्वाऽहं कथमिन्द्रकीलमधुना शक्नोमि गन्तुं दिवम्॥

मातेव त्वमपोपयः स्वपयसा सङ्गीतमालप्य मां
सस्नेहं त्वमदाः पितेव नितरां सम्पत्समृद्धिं च मे ।
अत्यन्तप्रियमित्रवत्त्वमकरोः प्रीत्या हितं सन्ततं
स्नेहग्रन्थिभिरित्थमेव सुदृढं बद्धोऽस्मि नानाविधैः ॥

विन्यस्याखिलभारमत्र विनयाद्विलब्धमेवाधुना
गन्तव्या तु तथापि सा सुरपुरी दैवाद्गुरोराज्ञया ।
याचे त्वामिदमेव पर्वतपते प्रस्थानकाले त्वया
क्षन्तव्योऽहमपि प्रसन्नमनसा माङ्गल्यवाचं पुनः ॥६४

इत्यापृच्छय गिरिं सुरेन्द्रतनयः प्रस्थानयात्रां तदा
निःशब्दं कृतवान्प्रदक्षिणमथ प्रीत्या रथात्त्रयम् ।
ऊर्ध्वं वीक्ष्य शिवं शिवाय मनसा ध्यात्वा च सम्यक्सुधी-
स्तस्थौ दिव्यरथान्तिके क्षणमसौ दिव्यां जिगीषुः पुरीम् ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ।

आपृच्छत महाशैलमिन्द्रकीलं धनंजयः ।
कथञ्चित्स गुणैः श्रेष्ठं कयाचिद्व्यथया तदा ॥ १ ॥

शुकादिभिर्विहङ्गैश्च तथा प्रस्रवणैर्गिरिः ।
नूनं विजययात्रायै पार्थायानुमतिं ददौ ॥ २ ॥

आरुरोह रथं धीमानर्जुनः कालचोदितः ।
सूतेन दत्तहस्तः सन्मानयन्स्वपितुर्वचः ॥ ३ ॥

शक्रस्य रथमध्यास्य शक्रतुल्यो रराज सः ।
आधारापेक्षया नूनमाधेयस्य प्रकर्षता ॥ ४ ॥

सार्थं यथा महद्वाक्यं सार्जुनः सारथिस्तथा ।
श्रेष्ठं शब्दगुणं रम्यं प्रतस्थे स हरेः पदम् ॥ ५ ॥

क्रमात्प्रचक्रमे नेतुमरुणो भास्करं यथा ।
रथस्थं तु तथा पार्थमूर्ध्वं तं मातलिर्दिवम् ॥ ६ ॥

इमाविन्द्रविमानेन दिव्येनाद्भुतकर्मणा ।
क्षणात् मर्त्यविमानानां पन्थानमधिजग्मतुः ॥ ७ ॥

तस्मादूर्ध्वं गते तस्मिन्नद्राक्षीत्स सहस्रशः ।
विविधानि विमानानि रूपवन्ति धनंजयः ॥ ८ ॥

पितॄणां पदमेवेदं यत्र तृप्ताश्चरन्ति ते ।
भूमौ पुण्यात्मभिर्धर्मा यैः कृताः पूर्वजन्मनि ॥ ९ ॥

रथोऽभ्रपटलान्तीर्त्वा रवेणाम्बुधिमन्विमान् ।
अधः कृत्वाऽतिवेगेन गच्छन्नासीद्विहायसा ॥ १० ॥

ततश्चोर्ध्वं समानीतं विमानं गगने जवात् ।
ताभ्यां महत्पदं रम्यमचिराच्चोपलक्षितम् ॥ ११ ॥

इन्दुर्न लक्षितस्तत्र नादृश्यत रविः क्वचित् ।
द्युतिमन्ति तु दृष्टानि ताराकाराण्यनेकशः ॥ १२ ॥

पार्थस्तु विस्मिताक्षिभ्यां पार्श्वभागेन दृष्टवान् ।
छन्नानि हरितैरुच्चैरमून्यस्य पथि क्षणम् ॥ १३ ॥

स्वप्रकाशेन भासन्ते पुण्यलब्धेन तत्पदे ।
सुदूरगत्वानि दृश्यन्ते दीपवत्सुमहान्त्यपि ॥ १४ ॥

अत्रासते महाधन्याः स्थानेष्वेव स्वतेजसा ।
राजर्षयश्च वीराश्च ये भूम्यां निहता युधि ॥ १५ ॥

नातिदूरे च भासन्ते ते भृशं शतसंख्यया ।
तपसाऽपि महायज्ञैर्ये धीराः भुवि संस्कृताः ॥ १६ ॥

नीतं सुरेन्द्रयानं तत्क्षणादेव ततोपरि ।
पदं जगाम यद्भाति पीतवर्णांशुभिः स्वयम् ॥ १७ ॥

निवसन्त्यत्र गन्धर्वाः नृत्यगानैकतत्पराः ।
ज्वलन्तः सूर्यवत्कान्त्या स्वविमानैश्चरन्ति च ॥ १८ ॥

गुह्यकानां महर्षीणां पदमप्सरसां तथा ।
तत्पश्चात् नातिदूरे तु वर्तते दिव्ययोषिताम् ॥ १९ ॥

स्वतेजोद्भ्राजमानां तु लोकान्दृष्ट्वा सुविस्मितम् ।
मातलिस्तमुवाचाथ रथमूर्ध्वं प्रवर्तयन् ॥ २० ॥

एते खलु महाधन्याः स्थानान्यास्थाय फाल्गुन ।
सर्वतद्विलसन्त्येवं स्वकीयान्यात्मशोभया ॥ २१ ॥

स्फुरन्तीव लसन्तीव ताराख्पाण्यनेकशः ।
विभावर्यां विलोकयन्ते वसुधायां तु मानवैः ॥ २२ ॥

मेघनादसमं नादं श्रुत्वा तत्रार्जुनः क्षणात् ।
वीरः स परितश्चक्रे वीरसिंहावलोकनम् ॥ २३ ॥

विलसन्तं चतुर्दन्तं पार्थः कैलाससन्निभम् ।
चिरं विसिष्मिये धीरः दृष्ट्वा हृदय सन्निभम् ॥ २४ ॥

शक्रतुल्यं तमालोक्य शक्रात्मजमथार्जुनम् ।
शक्रेभो गर्जनं चक्रे शक्रोऽयमिति शङ्कयन् ॥ २५ ॥

आवहन्तीं ततः शुभ्रां हस्ताभ्यां पुष्पमालिकाम् ।
ददर्श स्वर्गलक्ष्मीं तद्धस्तिनादप्रबोधिनीम् ॥ २६ ॥

सर्वाः सम्पद आहृत्य सर्वमङ्गलकारिणी ।
प्रदातुमिव पार्थाय सर्वाभीष्टमुपागता ॥ २७ ॥

मन्दस्मेरमुखाम्भोजा तमेव कमलेक्षणा ।
व्याहर्तुं स्वागतं स्वर्गे समायातेव सागरात् ॥ २८ ॥

ऐरावतानुमत्यैव स्वर्गलोकं धनंजयः ।
आश्चर्यवत्स पश्यंस्तां स्वर्गलक्ष्मीं समाविशत् ॥ २९ ॥

ददर्श सुभगां रम्यां पुरींताममरावतीम् ।
स्वर्लोकशेखरीभूतां शतक्रतुविराजिताम् ॥ ३० ॥

विमानानां सहस्राणि विचित्राणि व्यलोकयत् ।
रथाङ्गणेषु रम्येषु पार्थः कामगतीन्यसौ ॥ ३१ ॥

पारिजातादिवृक्षाणां सर्वदा पुण्यगन्धिनाम् ।
विलसन्ति वनान्यत्र प्रसूनैर्दिव्यगन्धिभिः ॥ ३२ ॥

लसन्ति सुमनःसङ्घाढ्वनान्युपवनानि च ।
वीज्यमानानि शैत्येन सदागतिमता सदा ॥ ३३ ॥

नन्दनोपवनं रम्यमप्सरोगणसेवितम् ।
दृष्ट्वा मेने स पार्थस्तु हूयमानमिव द्रुमैः ॥ ३४ ॥

मन्दानिलैर्गुडाकेशो मन्दाकिन्यां स दृष्टवान् ।
सदैवानन्दितां लक्ष्या हेमराजीवसन्ततिम् ॥ ३५ ॥

क्वचिद्रथास्तु धर्मिष्टान् क्वचिद्वीरान् हतान्युधि ।
आनयन्तः क्षितेरामन् क्वचिद्यज्ञैश्च संस्कृतन् ॥ ३६ ॥

अन्यत्र ददर्शीर्मालामद्राक्षीत्स सुराङ्गनाः ।
वीरान्वरीतुकामास्तान् पश्यन्तीर्विस्यवीक्षणैः ॥ ३७ ॥

अवातरद्विमानं तदचिरात्तु रथ ङ्गणे ।
बहिर्गतौ विमानाच्च तस्मादर्जुनमातली ॥ ३८ ॥

निर्निमेषैर्मले तस्य निक्षिप्ताः कुसुमस्रजः ।
पूर्णकुम्भादिभिः पार्थो विधिवत्सत्कृतस्तदा ॥ ३९ ॥

स्वागतं स्वागतं वीर सर्वत्र विजयी भव ।
इति शब्दैर्दिशां भागाः स्वर्गेऽस्मिन्परिपूरिताः ॥ ४० ॥

अथ नीतो गुडाकेशः प्रतस्थे राजवीथिना ।
देवैश्च सिद्धगन्धर्वैर्देवराजमहासमाम् ॥ ४१ ॥

प्रथमं मुरजादीनां वाद्यानां घोषणं महत् ।
ततो गन्धर्वसिद्धानामभवन्दिव्यपङ्क्तयः ॥ ४२ ॥

विविधैर्जयशब्दैस्ते विबुधा मनसापि तम् ।
विजयं मानयन्तश्च जग्मुर्विजयगीतिभिः ॥ ४३ ॥

उच्चैःश्रवःप्रभृत्यश्वैरुह्यमानो धनंजयः ।
गच्छन्नास्त ततः पश्चात्पश्यन्नेव ततस्ततः ॥ ४४ ॥

शब्दायन्तो दिशो मन्त्रैर्मानयन्तः समन्ततः ।
बहवो ऋषयो धन्यमनुजग्मुस्ततोऽर्जुनम् ॥ ४५ ॥

उर्वशीमेनकादीनामुद्दायद्भिर्गणैरसौ ।
चारुकोणेक्षणैः पश्चाद्विभ्रमैश्चान्वगम्यत ॥ ४६ ॥

अनिमेषाक्षिभिः पार्थमुभयोः पार्श्वयोः पथाम् ।
तथा देवाः पपुः स्नेहादनिमेषा यथाऽभवन् ॥ ४७ ॥

पुरस्कृत्य मखायं तं सहायं च समीरणम् ।
अपूर्वमतिथिं द्रष्टुमनङ्गोऽपि समाययौ ॥ ४८ ॥

गच्छन्नास्त गुडाकेशस्त्वपश्यन्निव मन्मथम् ।
अनङ्गं कथमीक्षेत शिवभक्तः परंतपः ॥ ४९ ॥

दृष्टयः सुन्दराक्षीणां सुन्दराङ्गमनुत्तमम् ।
दृष्ट्वा नाशक्नुवन्द्रष्टुमनङ्गं तु कदाचन ॥ ५० ॥

अतश्चिन्तितवान् किञ्चिदात्मानं स्वयमात्मना ।
लक्षितो नापि रत्याहमनङ्गोऽस्मीति लज्जया ॥ ५१ ॥

भावयन्तं गुणैरेनं जयन्तं च जयन्निव ।
विरराज वृषेवासौ वृषपुत्रः परंतपः ॥ ५२ ॥

अनङ्गस्त्वङ्गनारत्नमुर्वशीं प्राविशत् क्षणात् ।
प्रतीक्ष्य सुन्दराङ्गं तं प्रतीकारचिकीर्षया ॥ ५३ ॥

ततः प्रभृत्यनिर्वाच्यविकारेण विलासिनी ।
समाक्रान्तेव संवृत्ता बलवन्मदनाधिना ॥ ५४ ॥

अपश्यन्निव पार्थस्तु गच्छन्नासीत् पथा दिवः ।
तादृशीमुर्वशीं रम्यामर्जुनाक्षिप्तचेतनाम् ॥ ५५ ॥

दृष्टान्यदृष्टपूर्वाणि वस्तूनि पथि जिष्णुना ।
ज्योतींषि ज्योतिषा चापि स्वर्गे तेन महीयसा ॥ ५६ ॥

ससालभञ्जिकान्यत्र हेमसौधानि दृष्टवान् ।
क्वचिद्दिव्यद्रुमान्पर्णैः प्रसूनैश्च प्रशोभितान् ॥ ५७ ॥

क्रीडाशैलान्विचित्रांश्च तोरणानि व्यलोकयत् ।
पार्थः स्तिमितनेत्राभ्यां जलयन्त्राणि च क्वचित् ॥ ५८ ॥

क्वचिन्मरकतच्छन्नसोपानैर्विलसन्त्यसौ ।
हेमाम्बुजैः समेतानि सरांस्यपि समैक्षत ॥ ५९ ॥

वृक्षेभ्यः पतितैः पुष्पैश्छादिताः स्वर्गभूमयः ।
पवि प्रतीक्ष्य तिष्ठन्त्यः प्रमदा इव वीक्षिताः ॥ ६० ॥

न दृष्टः कुत्रचित्तेन महता तत्र जिष्णुना ।
नादैर्मुखरयन्नाशां हींकारैरालपन्नलिः ॥ ६१ ॥

बालां वा बालिकां वापि वृद्धं वृद्धामपि क्वचित् ।
नाकलोके महारम्ये नापश्यत्स धनंजयः ॥ ६२ ॥

मयूरकोकिलादींश्च खगानत्र न दृष्टवान् ।
स्वर्गलोके गुडाकेशः सारङ्गादीन्मृगानपि ॥ ६३ ॥

वातायनेषु दीर्घाक्षीः सौधे मुकुललोचनाः ।
परं सर्वत्र सोऽपश्यदचञ्चलविलोचनाः ॥ ६४ ॥

सुधांशोः प्रतिबिम्बानां सहस्राणि समैक्षत ।
विना सुधांशुबिम्बेन नारीवदनकैतवात् ॥ ६५ ॥

निश्चलत्वात्तु नारीणां स्वर्णवर्णोपशोभिता ।
काञ्चनप्रतिमेवात्र गात्रपङ्क्तिर्विशङ्किता ॥ ६६ ॥

नापश्यत्तत्र कुत्रापि भौमसौभाग्यसंपदम् ।
प्रदक्षिणं भुवं तस्मात् करोत्येव कलाधरः ॥ ६७ ॥

विना मधुकरं पुष्पं पङ्कजं शैवलं विना ।
प्रकाशते कथं लोके यथा बिम्बं शुकं विना ॥ ६८ ॥

प्रजया राजते राजा निशायां तु निशाकरः ।
सत्यं विराजते नित्यमलकैराननं यथा ॥ ६९ ॥

मीनाक्षीणां मृगाक्षीणां विद्यते महदन्तरम् ।
नारीणां सनिमेषाणामनिमेषदृशां तथा ॥ ७० ॥

वसुधायाः कथं भूयात्स्वर्गलक्ष्मीर्गरीयसी ।
स्वर्गकामो यजेतेति किमर्थं व्याहृतं श्रुति ॥ ७१ ॥

स्वर्ग एव सुधाऽस्तीति वचनं व्याहृतं वृथा ।
वर्तते परितो नित्यं वसुधा हि सुधाकरः ॥ ७२ ॥

स्वर्गे वा वसुधायां वा मनस्येवास्ति नः सुखम् ।
सुखदुःखोपभोगानां साधनं हि मनः सदा ॥ ७३ ॥

अत एव स कैलासे वसतीन्दुकलाधरः ।
लक्ष्मीभर्तुर्निवासोऽपि क्षीराब्धावेव वर्तते ॥ ७४ ॥

इत्थं विचिन्तयन् श्रीमान्मण्डनैर्मण्डितां सभाम् ।
प्रविवेश गुडाकेशो शचीशक्रोपशोभिताम् ॥ ७५ ॥

त्रिदशान् रत्नमञ्चेषु गन्धर्वान् स्फाटिकेषु च ।
सिद्धान् काञ्चनमञ्चेषु संददर्शासनेष्वयम् । ७६ ॥

वितानैस्तोरणैर्धन्यः पुष्पवृन्दैः सुगन्धिभिः ।
अद्राक्षीत् स सभामध्ये रम्यां काञ्चनवेदिकाम् ॥ ७७ ॥

तस्याश्चोपरि संदृष्टं दिव्यसिंहासनं महत् ।
विचित्ररत्नसंसक्तैर्मण्डनैश्च विचित्रितम् ॥ ७८ ॥

पार्थः सिंहासने तस्मिन्भानुस्पर्धिमहाप्रभम् ।
सहस्रनेत्रमद्राक्षीद्द्विनेत्रोऽपि शचीपतिम् ॥ ७९ ॥

नीराजयन्तमेकैकं देवानां मकुटाभया ।
पदोपकण्ठमिन्द्रस्य पश्यति स्म परंतपः ॥ ८० ॥

शचीसमेतमासीनं वीज्यमानं विलोक्य तम् ।
निर्निमेषोऽभवत्सोऽपि स्तूयमानं च वासवम् ॥ ८१ ॥

शक्रं श्वेतातपत्रेण दृष्ट्वा माण्डतमर्जुनः ।
प्रश्रयोपनतः श्रीमानाजगामान्तिकं पितुः ॥ ८२ ॥

ननाम पादयोः पार्थः शचीवासवयोः पृथक् ।
प्रथमं चक्षुषा पश्चान्मनसा शिरसा पुनः ॥ ८३ ॥

बाहुभ्यां वृत्तपीनाभ्यां परिष्वज्य पुरंदरः ।
प्रीतिभाजं स कौन्तेयमुपावेशयदन्तिके ॥ ८४ ॥

असकृत्फाल्गुनं पश्चादुपाघ्राय स मूर्धनि ।
अङ्कमारोपयामास वात्सल्येन पिता सुतम् ॥ ८५ ॥

पाणिं गाण्डीवपाणेस्तु गृहीत्वा परिलालयन् ।
प्रीत्या संवाहयामास वज्रपाणिः स्वपाणिना ॥ ८६ ॥

चक्षुःकोणेन पश्यन्तं वीक्षमाणः सुविस्मितम् ।
उत्फुल्लाक्ष सहस्राक्षस्तृप्तोऽभून्न कदाचन ॥ ८७ ॥

समामेकासनासीनौ भासयन्तौ परस्परम् ।
दृष्ट्वा तत्राभवन् सर्वे वासवद्वयशङ्किनः ॥ ८८ ॥

सद्यः क्वणितमाकर्ण्य नूपुरेभ्यो विनिर्गतम् ।
मुखं व्यावर्तयामासुः सममेव सुरादयः ॥ ८९ ॥

उर्वशी मेनका रम्भा कुम्भयोनिः स्वयं-प्रभा ।
गोपाली च समामन्याः प्राविशन्नमराङ्गनाः ॥ ९० ॥

झंकारनादैर्बहुनूपुराणां
मेरीनिनादैर्मुरजादिवाद्यैः ।
शब्दैस्तथा तालमृदङ्गरम्यै-
र्नृत्तं तरुण्यः सममेव चक्रुः ॥ ९१ ॥

विलोक्य रक्तान्तविलोचनं तं
रागान्वनेत्रा ननृतुः सुदत्यः ।
सविभ्रमप्रेरितचित्तवृत्तीः
प्रदर्शयन्त्यः किल विक्रियाभिः ॥ ९२ ॥

जानुद्वयं काश्चन कम्पयन्त्यः
बिम्बाधरं सुन्दरमिन्दुमुख्यः ।
ईषद्धसन्त्यः सुरलोकनार्यः
प्रदर्शयामासुरिवात्मभावम् ॥ ९३ ॥

भ्रूभङ्गभेदैः कतिचित्कटाक्षैः
सार्धं प्रदर्श्यात्ममनोविकारम् ।
गन्धर्वनार्यः किल गन्धपुष्पै-
र्निवेदयन्त्यो ननृतुः स्वकामम् ॥ ९४ ॥

पदाङ्गुलीनां च कराङ्गुलीनां
न्यासैः पदाभ्यां विजयंकराभ्याम् ।
अनङ्गलेखं च विलिख्य किंचित्
प्रोचुः प्रियं काश्चन नेत्रभङ्गैः ॥ ९५ ॥

तं दीर्घबाहुं प्रियकान्तदृष्ट्या
विलोक्य काश्चिन्मनसोऽभिलाषम् ।
प्रचालिताभ्यां स्वपयोधराभ्यां
विज्ञापयन्त्यो ननृतुर्नताङ्ग्यः ॥ ९६ ॥

मनोहराणां मदनातुराणा-
मप्यास मध्यं वरवर्णिनी सा ।
समुर्वशी वश्यकटाक्षदृष्ट्या
पार्थं पिबन्तीव चकार नृत्तम् ॥ ९७ ॥

प्रेमलपाभ्यां मुहुरीक्षमाणा
मुग्धा स्खलन्तीव मुहुः पदाभ्याम् ।
ननर्त मध्ये नवनर्तकीनां
प्रदर्शयन्ती मदनप्रभावम् ॥ ९८ ॥

आदाय नेत्रादिव दिव्यवर्णं
तमङ्गना सा किल वर्णयन्ती ।
अनङ्गलेखं नखलेखिनीभि-
र्विलोकयन्ती स्वमुखे लिलेख ॥ ९९ ॥

सङ्गीतसाहित्यपदानुसारं
भावैरपाङ्गाभिनयादिभिश्च ।
पदे पदे सा मदनाभिविष्टा
संमोहयामास सुरेन्द्रलोकम् ॥ १०० ॥

विलासिनीनां सुरसुन्दरीणां
तथाप्यसौ विभ्रमविक्रियाभिः ।
अचालितः शक्रसुतो न ताभि-
र्न विक्रियाभिः प्रचलन्ति धीराः ॥ १०१ ॥

सुधांशुजालैः परिपूरितायां
सर्वाणि नीलोत्पलपल्वलानि ।
विलोक्य चन्द्रं विकसन्ति रात्रौ
विधुः कदाचिन्न विकारमेति ॥ १०२ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
पञ्चमः सर्गः ॥

## षष्ठः सर्गः

सुराङ्गनानां नयनान्तवीक्षणैः
क्षणे क्षणे वीक्षितसुन्दराकृतिः ।
सुरालये पञ्चसमाः सुपूजितो
जितेन्द्रियः सन्ननयत् दृढव्रतः ॥ १ ॥

अयाचितारं तमयाचितः प्रियं
स्वयं समाहूय कदाचिदात्मजम् ।
अमोघवज्रं दयितं प्रदत्तवा-
नुपात्तविद्याय जयाय वासवः ॥ २ ॥

अमुष्य संहारविमोचने मुहु-
र्मुहुश्च कुर्वन्किल मन्त्रपूर्वके ।
पटुत्वमाप्तुं दिवि तद्गृहे पितुः
स तु क्रियावान्वसति स्म फाल्गुनः ॥ ३ ॥

कदाचिदिन्द्रः स्वकरेण सत्कृतं
कृतास्त्रविधं सदयं धनंजयम् ।
उवाच सन्त्वं परिलालयन्सुतं
मिताक्षरैर्ञ्जितसुन्दरं वचः ॥ ४ ॥

त्वमस्त्रशस्त्रेषु सुशिक्षितो यथा
तथा च गांधर्वकलासु साम्प्रतम् ।
विशिष्य वादितकलासु विक्रम
क्रमासु सामर्थ्यमवाप्यतां त्वया ॥ ५ ॥

त्रिभिस्तु वाद्यैः किल तत्सुमिश्रितं
श्रुतं च वादित्रमितीह कथ्यते ।
नृणां तु लोके सुत नावलोकितं
विलोकितं तद्दिवि सेव्यते सुरैः ॥ ६ ॥

स चित्रसेनो विदितस्त्वया सुत
हितार्थमस्माच्चमवेहि भद्र तत् ।
तवैष गन्धर्वपतिर्भवेत्सखा
मुखान्मघोनः श्रुतमित्थमैन्द्रिणा ॥ ७ ॥

विना प्रयासं दिवि वाद्यमाद्यत-
स्तदेव वादित्रमनेन बोधितम् ।
अधीतवान्नृत्तकलां सुधीरसौ
रसान्वितो गानकलामपि प्रियाम् ॥ ८ ॥

दिवि प्रणृत्यन्विहरन्बहूनयं
स्वयं च गायन्नयति स्म वासरान् ।
सचित्रसेनः किल दिव्यमन्दिरे
सुरेन्द्रसूनुः सुरलोकवासिभिः ॥ ९ ॥

तथाऽपि नालभ्यत शर्म जिष्णुना
मनागपि स्वर्गतले मनोरमे ।
स्मरन् हि दारान् जननीं सहोदरा-
नुदारशीलानवसत्स सन्ततम् ॥ १० ॥

स चित्रसेनं बहुमान्य सादरं
पुरन्दरः सस्मितमेवमेकदा ।
समादिदेश प्रियमित्रमात्मन-
स्तमात्मसूनोः शुभकाङ्क्षिणं महान् ॥ ११ ॥

सुराङ्गनां कामयते सुमध्यमां
स मध्यमः पाण्डव उर्वशीं वशी ।
अतः स मौनं भजतीत्यवेहि तं
हितंकरं रक्ष हितेन कर्मणा ॥ १२ ॥

मदस्त्रशस्त्रादिषु सुष्ठु लब्धया
स विद्यया पाटवमाप्तवान्सुतः ।
त्वमत्र ते दर्शय कर्म कौशलं
विलासिनीसङ्गविशारदोऽसि चेत् ॥ १३ ॥

प्रियंकर त्वं कामोरुमुर्वशीं
वशीकुरु त्वद्वचनैर्वरानानाम् ।
प्रियं वचो व्याहर मानिनीं तथा
यथोपतिष्ठेत्स्वयमेव फाल्गुनम् ॥ १४ ॥

मनोहराक्षीं मधुपुष्पहारिणीं
विहारिणीं मन्मथचारुवीक्षणैः ।
सुधाधरां बद्धपयोधरान्वितां
स्मितानना द्रष्टुमितो व्रजाम्यहम् ॥ १५ ॥

इति ब्रुवन्नेव जगाम तत्क्षणं
क्षणं वचस्तन्मनसा स्मरन्हरेः ।
समीक्षितुं तां सुदतीं सुगन्धिनीं
सुगन्धि गन्धर्वपतिस्तदालयम् ॥ १६ ॥

समन्वगाद्गन्धवहस्तदा शनैः
शनैश्च गन्धैरनुलेपयन्दिशः ।
समभ्यपश्यन्नतिरंहसा हृदा
तदा व्रजन्नास्त सुरेन्द्रशासनात् ॥ १७ ॥

सुराङ्गनावासमसौ प्रविष्टवान्
प्रविष्टमात्रेण विशिष्टमन्तिके ।
ददर्श तस्या मणिभिः सुवर्णितं
सुवर्णहर्म्यं कुसुमैरलंकृतम् ॥ १८ ॥

सपर्यया प्रत्युदगच्छदुर्वशी
निशाम्य दूराच्च दृशा यथाविधि ।
तया स गन्धर्वपतिः सुपूजितो
जितामृतांशुप्रभया ललामया ॥ १९ ॥

मनोज्ञमङ्गे मदिरेक्षणां सुखं
सुखोपविष्टामुपवेशितस्ताम् ।
विलोक्य गन्धर्वपतिः प्रचक्रमे
क्रमेण वक्तुं वचनं शतक्रतोः ॥ २० ॥

सुराधिपादागतमित्यवेहि मां

हिमांशुवक्त्रे हितकारिणं च ते ।

इदं त्वमाकर्णय मद्वचो हितं

हितंकराद्देवपतेर्मुखागतम् ॥ २१ ॥

गुणाभिरामं गुरुवन्महागुणं

गुणैर्वराणामभिकाम्यरूपिणम् ।

सुरेन्द्रसूनुं नलवच्चरोत्तमं

वमापतार्थं त्वमवेहि फाल्गुनम् ॥ २२ ॥

बृहस्पतिं वीरमिवावधारणे

रणे कुमारं रसिकं तु रागिणाम् ।

मनोरमाणां च मनोभवं नवं

न वेत्सि किं सुभ्रु नवाङ्गशोभिनम् ॥ २३ ॥

परंतपं पाण्डुसुतेषु मध्यमं

सुमध्यमे कुन्तिसुतं सुधीषु तम् ।

त्वमत्र गाण्डीविनमर्जुनं वरं

वरानने विद्धि बुधैः प्रशंसितम् ॥ २४ ॥

प्रसिद्धवीरः प्रतिमानवान्महा-

महेन्द्रतुल्यश्च सदाऽनहंकृतः ।

सुधांशुवंशप्रभवः प्रतापवा-

नवासवान्पाशुपतास्त्रमप्यसौ ॥ २५ ॥

स नीलकण्ठेन बहुप्रशंसितः
प्रशंसनीयः स कृपास्त्रदुर्लभम् ।
अतिप्रतापाद्भवतीव मित्रजित्
त्वमित्रजिद्वीर्यपराक्रमैर्भृशम् ॥ २६ ॥

स सत्यवान्सत्यपराक्रमो युधि
युधिष्ठिरस्यास्ति सहोदरः प्रियः ।
स्थिरप्रतिज्ञः स्थिरधीःसदा बली
बलिश्च दाने बलहीनरक्षकः ॥ २७ ॥

युधि स्थिरोऽसौ च युधिष्ठिरानुजः
पुरा निहन्त्येव महान्महायुधि ।
सुयोधनादीन्कुरुवंशसम्भवान्
भवप्रसादेन महास्त्रसंचयैः ॥ २८ ॥

शृणुष्व सुश्रोणि दशापरो यथा
तथाऽस्त्रशस्त्रेषु महाऽस्ति विक्रमः ।
अनेन काले धिरवे विधोः कला
कलाधरेणेश कला च शेखरे ॥ २९ ॥

सवीरशुल्कः द्रुपदात्मजासखः
सखा च कृष्णस्य मदा भवत्यसौ ।
अवाप गाण्डीवधनुर्महानला-
दलाद्विजित्येव शरैः शचीपतिम् ॥ ३० ॥

सुदर्शनीयस्त्वहितापकारकः
स कारकश्चास्त्यबलार्तिनाशने ।
मयूरतुल्यः किल ताण्डवप्रियः
प्रियंकरेभ्यः प्रियमातनोत्यसौ ॥ ३१ ॥

दिवा प्रशोभा न दिवाकरं विना
विना शशाङ्कं न निशा प्रकाशते ।
त्वया विना चाप्सरसां कुतः प्रभा
प्रभासते किं विजयादृते मही ॥ ३२ ॥

स्वकर्मभिः श्लाघ्यगुणैश्च कीर्तिमान्
पुमान्प्रशान्तोऽपि तथा प्रतापवान् ।
कुले प्रसूतिः किल धीरभूभृतां
पितामहस्तस्य स बादरायणः ॥ ३३ ॥

तवाङ्कशोभा विजयाङ्कशोभया
प्रशोभते नूनमतीव भामिनि ।
अतीव भद्रे नवमालिकाऽनिशं
न शोभते किं सहकारसंश्रयात् ॥ ३४ ॥

चतुर्मुखं तं चतुराननावहा
विहाय मोहात्कमले शयानम् ।
समेत्य तस्माद्द्विजये विमोहिता
हिते वसत्येकमुखे सरस्वती ॥ ३५ ॥

विलोक्य पार्थस्य शुभाननं परं
पराजितेन्दुः परिभूयमानसः ।
अलक्षितः सन् स विलीयते स्वयं
ह्रियाऽभ्रपृष्ठे विटपान्तरेषु च ॥ ३६ ॥

त्वया प्रयोज्यास्तव रूपसंपदः
पदे पदे सुभ्रु परंतपाकृतौ ।
यतः स धत्ते च वरेष्वतुल्यता-
मतुल्यधैर्यादिगुणोच्चयं समम् ॥ ३७ ॥

स कुन्तिपुत्रो न पुरूरवाः क्वचित्
क्वचित्तु नासौ न मुनिर्विभाण्डकः ।
वशं तवेमौ मुनिभूभृतौ गतौ
क्षितौ महान्तौ बहुमान्यतेजसौ ॥ ३८ ॥

स्मरारिभक्तं विजयं जितेन्द्रियं
तवेन्द्रियैः सुन्दरि तं जयेः कथम् ।
निरर्थकं काञ्चनकान्ति ते वपु-
र्वपुस्त्वदीयं न वशीकरोति चेत् ॥ ३९ ॥

शुभे नियुक्ता प्रभुणाऽद्य सुभ्रु ते
भ्रुवोर्विलासैश्च पदैश्च विभ्रमैः ।
समेत्य पार्थं निभृतं निशामुखे
सुखं प्रदातुं सुरतोत्सवार्थिने ॥ ४० ॥

अनङ्गमुद्दीपय वश्यसाधनै-

धनञ्जयं तं वशिनं वशीकुरु ।

महातिथिः स्वर्गरतिक्रियास्वयं

स्वयं विलासैरुपचर्यतां त्वया ॥ ४१ ॥

विचिन्तयन्ती विजयं स्मरातुरा

सुराधिपाज्ञां तु निशम्य तत्क्षणम् ।

विलोक्य गन्धर्वपतिं तमुर्वशी

कृशोदरी प्रत्यवदत्पृथुस्तनी ॥ ४२ ॥

भवन्मुखाच्छ्रोतुमिमान्महागुणान्

गुणाकरस्यास्य सखे महामतेः ।

तथा च संगन्तुमपीन्द्रसम्भवं

भवामि धन्या पुरुहूतशासनात् ॥ ४३ ॥

गुरोर्नियोगं बहुमानयाम्यहं

महामतेऽद्य क्रियया यथामति ।

भृशं गुडाकेशगुणैर्वशीकृता

कृतार्थता निर्वहणैर्हि साध्यते ॥ ४४ ॥

जितात्मवान्सर्वगुणैरलंकृतः

कृतास्त्रविद्योऽस्तु परंतपोऽथवा ।

तथापि सौन्दर्यमदेन वञ्चितं

जितेन्द्रियं स्त्रीजितमप्यवैमि तम् ॥ ४५ ॥

समङ्गनालोलमतीव कामिनं
जनाः समाहुर्बहुदारमर्जुनम् ।
सुरास्तु पश्यन्तु पुरंदरादयो
मयैकया कान्तदृशा वशीकृतम् ॥ ४६ ॥

न कापि लोकेष्वखिलेषु मत्समा
समानकान्तिः प्रियदर्शनाऽस्ति मे ।
स्मरोऽपि मन्नेत्रशरैर्वशीकृतो
वशीकृताः संयमिनोऽपि यच्छरैः ॥ ४७ ॥

अवेहि मे लोचनयोरमोघता-
ममोघशक्त्या प्रथमं कयाचन ।
भवे प्रियेऽहं नवजातमन्मथा
तथापि कष्टास्म्यमरेन्द्रसूनुना ॥ ४८ ॥

अतस्त्वदाज्ञामनुसृत्य तं प्रभो
प्रभोः प्रभावादुपगम्य पाण्डवम् ।
प्रसादयाम्यद्य सुखप्रदाय त-
त्सुखं प्रदाय स्मरसङ्गमोद्भवम् ॥ ४९ ॥

तमित्थमुक्त्वा विससर्ज वीक्षणा-
त्क्षणेन गन्धर्वपतिं सतीव सा ।
स चित्रसेनोऽपि जगाम सस्मितं
स्मितानना दृष्टिपथात्स्वमन्दिरम् ॥ ५० ॥

यतोऽस्ति सा मोहयितुं यतीश्वरा-

न्वरानना वासवमुख्यसाधनम् ।

अथोर्वशीं तां स तथा परीक्षितुं

परंतपं मोहयितुं प्रयुक्तवान् ॥ ५१ ॥

प्रवाहिनीवारिणि मारपीडिता

कृताभिषेका कृतनिश्चया सती ।

समीक्षमाणा समुपाविशन्मुखं

मुखार्पणायेव वराय दर्पणे ॥ ५२ ॥

ततोऽलकश्रेणिमलंचकार सा

रसावहैराभरणैः सुराङ्गना ।

स्वकेशपाशं कुसुमैः सुकेशिनी

प्रकाशिनी दिव्यसुगन्धिलेपनैः ॥ ५३ ॥

प्रवृद्धवक्षोरुहकैतवाश्रयौ

नवाङ्गरागैरनुलिप्तवक्षसा ।

विशिष्टपीयूषघटौ हृदा समं

समुद्वहन्ती विजयोन्मुखी बभौ ॥ ५४ ॥

मनोहरैश्चारु चकार मण्डितं

स्वगण्डयुग्मं मणिकुण्डलादिभिः ।

बभूव दिव्याञ्जनरञ्जितेक्षणा

क्षणाच्च फाले तिलकेन शोभिता ॥ ५५ ॥

सुगन्धताम्बूलधराधरा सती
सुतीक्ष्णकान्तिर्विजयानुरागिणी ।
बभूव ताटङ्कयुगेन भासुरा
सुराङ्गना चम्पकनासिका भृशम् ॥ ५६ ॥

विजृम्भमाणं कुचकुम्भयोस्तले
प्रलम्बमाना मृदुकोमले गले ।
प्रवालमाला तरलीकृता मुहु-
र्मुहुस्तताडेव रतिप्रचोदिता ॥ ५७ ॥

अभूत्तदा नीलदुकूलभासुरा
धरा नवोढेव विहारवाञ्छया ।
सितोत्तरीयेण कृतावगुण्ठना
घनावगुण्ठेन शरच्छ्री यथा ॥ ५८ ॥

विशिष्टतल्पे शयनोत्तमे नवे
नवीनचित्रेण विचित्रिते नरम् ।
सुदीर्घमङ्गैः सरसं मनोरमं
रमेयं कामं विजयं निरामयम् ॥ ५९ ॥

विचिन्तयन्तीत्थमियं प्रतिक्षणं
क्षणात्क्षपायां सुरतोत्सवार्थिनी ।
वृथैव याता परिवृद्धमन्मथा
तरङ्गमालेव कलाधरोदये ॥ ६० ॥

चचौ प्रयान्ती वरमायतेक्षणा
समीक्षणीयैर्विविधैश्च विभ्रमैः ।
अचञ्चलाक्षी पथि चञ्चलेक्षणै-
र्क्षणे क्षणे दिक्षु विचिन्वतीव तम् ॥ ६१ ॥

मनाङ् नमन्ती स्तनजृम्भणात्पदे
पदे स्खलन्ती मदनार्तिविक्लवा ।
सविभ्रमभ्रूर्मुहुरित्यमुर्वशी
वशीकृताऽभूद्वशिनेव केनचित् ॥ ६२ ॥

पयोधराभोगविजृम्भणातुरा
वरोपभोगार्थमितीव सत्वरम् ।
स्तनच्छदं सा शिथिलय्य चिन्तया
स्वयं दशन्ती रदनच्छदं बभौ ॥६३ ॥

सुसूक्ष्मवस्त्रेण कृतौ मनोहरौ
वरौ सितोरू जघनौ च शीतलौ ।
प्रदर्शयन्ती प्रययौ मनाक्पदे
पदे तदीयौ च ववल्गतुस्तनौ ॥ ६४ ॥

तथा व्रजन्तीं विजयस्य चालयं
प्रचालयन्तीमतिकोमलालकाम् ।
स्वयं वदन्तीं किमपि स्वजिह्वया
दयापरो वेत्ति कथं परंतपः ॥ ६५ ॥

जवेन तीर्त्वा करिणीव गामिनी
कथंचिदध्वानमियं सुमध्यमा ।
अवाप जिष्णोर्वसतिं मदालसा
मदान्धचित्तेव मुनेस्तपोवनम् ॥ ६६ ॥

यशिन्युपातिष्ठत तस्य तच्छुभं
शुभेक्षणा द्वारमवाप्य वेश्मनः ।
अनुस्मरन्तीयममुं शुभाकृतिं
पतिंवरा सा किमुताभिसारिका ॥ ६७ ॥

स तां तदीयागमनं च सत्वरं
परं विदित्वैव कृतावगुण्ठनाम् ।
सुराङ्गनां प्रत्युदगच्छदर्जुनो
विनानुरागं विनयेन कृत्यवित् ॥ ६८ ॥

प्रभेत्तुकामौ स्तनकञ्चुलीं स्तनौ
घनौ नताङ्ग्याः पुलकाङ्कितौ तदा ।
विजृम्भणाद्वा किमुतातिसाहसा-
रससाध्वसं तौ सरसौ ववल्गतुः ॥ ६९ ॥

परं व्यजानान्न यथार्थतो नरं
परंतपं साऽपि सुराङ्गना ध्रुवम् ।
कथं मदान्धाश्चरितं महात्मनां
जना विजानन्ति सुरालयेऽपि वा ॥ ७० ॥

सुधांशुसङ्गात्कुमुदेक्षणा क्षणा-
स्क्षणं सुखं तत्कुमुदिन्यवाप्नुयात् ।
सुखं सुखार्ताऽपि लभेत पद्मिनी
न चन्द्रिकायामरविन्दलोचना ॥ ७१ ॥

प्रफुल्लपङ्केरुहमीक्षते कथं
विधुः क्षपायां कुमुदार्तिभञ्जकः ।
परानुरक्ता यदि पद्मिनी भवेत्
भवेन्निमित्तं मदनान्धता ध्रुवम् ॥ ७२ ॥

स लज्जया संवृतलोचनस्तदा
मदानुरक्तां मदनप्रचोदिताम् ।
विलोक्य कुन्तीमिव तां तु मातरं
परंतपः पूजयितुं प्रचक्रमे ॥ ७३ ॥

अस्पन्दलोचनयुगेन तमीक्षमाणा-
मत्यन्तविस्मितदृशा प्रविलोकयंस्ताम् ।
पार्थः कृताञ्जलिरिदं मदनातुरां तां
कुन्तीमिव स्वजननीं विनयादवादीत् ॥ ७४ ॥

सुस्वागतं जननि ते सुरलोकसंस्थे
दिव्याङ्गनाभिरुपशोभितदिव्यमूर्ते ।
देवेन्द्रचित्तहितकारिणि देवकन्ये
धन्योऽस्म्यहं तव पदाम्बुजदर्शनेन ॥ ७५ ॥

वात्सल्यजातपवनेन सदापविद्धै-
 र्मामर्भकं तु करुणाब्धिमहातरङ्गैः ।
अत्रागताऽसि वचनैरभिषिच्य नूनं
 द्रष्टुं तथा विकचलोचनदृष्टिपातैः ॥ ७६ ॥

वन्देऽहमम्ब शिरसाऽप्सरसां वरिष्ठा-
 मङ्गीकुरु त्वमधुनाऽर्जुनदत्तमर्घ्यम् ।
पाद्यं च दिव्यचरिते हितभाषिणीदं
 पौत्रं प्रसीद मनसा पुरुवंशमान्ये ॥ ७७ ॥

अव्याजभूतकरुणेयमवर्णनीया
 पौत्रं प्रतीत्थमधुनाऽम्ब तथाप्यकाले ।
वात्सल्यपूरितहृदा स्वयमागताऽसि
 क्लेशं विहाय बहुदूरमपीह तीर्त्वा ॥ ७८ ॥

किं वा निवेदय मयाऽत्र तवाम्ब कार्यं
 जानामि किं न जननीं प्रति पुत्रधर्मम् ।
यद्दुष्करं भवतु कार्यमदुष्करं वा
 तत्साधयामि तव नूनमनुग्रहेण ॥ ७९ ॥

उर्वश्येषा सुरपतिसुताद्धन्त्व नोत्पश्यति स्म
 स्वर्गे लोके नवमनुभवं नाकलोकाङ्गनेत्थम् ।
सीतारामं स्मरपरवशादेव संगन्तुकामा
 रामभ्रात्राप्यनुपचरिता रावणस्य स्वसेव ॥ ८० ॥

अनुसरति यदीन्दुः रोहिणीसङ्गमिच्छु-
र्नभसि तमुपगन्तुं नान्यतारा यतन्ते ।
किमिति विरहिणीवद्रोरवीषि क्षपायां
रमणमभिलपन्तीवान्यधन्यानुरक्तम् ॥ ८१ ॥

कुररि विलपसि त्वं वीतनिद्रा किमर्थं
स्वपति जगति सौख्यं वीतचिन्ते निशायाम् ।
क इह विगतलज्जां मानहीनां मदान्धां
कथमुपचरति शोच्ये रात्रिरेवान्वशोच्या ॥ ८२ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
षष्ठः सर्गः ॥

## सप्तमः सर्गः ।

श्रुत्वा वचस्तस्य सुरेन्द्रसूनो-
विचिन्त्य किंचिद्विमनायमाना ।
पार्थं वशीकर्तुमुवाच वाक्यं
रागाक्षिकोणेन समीक्षमाणा ॥ १ ॥

चन्द्रानन त्वं शृणु सावधानं
सार्थं वचो पार्थ गुणानुविद्धम् ।
नेदं मदोन्मत्तमुखादिति त्वं
विनिर्गतं सुन्दर विद्धि सत्यम् ॥ २ ॥

पित्रा तवाहं प्रहिता प्रियेण
तवान्तिकं प्राप्तवतीमवेहि ।
कृष्टाममोघैश्च गुणैरिदानीं
कर्षन्ति वेगाद्धि गुणा गुणज्ञान् ॥ ३ ॥

तदा सभायां महतां महात्मन्
रुद्रार्कदेवाः मुनिपुङ्गवाश्च ।
गन्धर्वसिद्धास्त्वितरेऽपि मान्या-
स्त्वयाऽपि दृष्टाः किल वर्तमानाः ॥ ४ ॥

स्थानानुसारेण तथा प्रभावा-
त्तत्रोपविष्टेषु महत्सु सत्सु ।
तासु प्रनृत्तासु तथाप्सरस्सु
भवांस्तु मामेव ह्यथात्वपश्यत् ॥ ५ ॥

नृत्तावसाने निखिलानिमेषा
  महर्षयश्चाप्सरसश्च दिव्याः ।
प्रभोरनुज्ञामनुसृत्य सर्वे
  स्वं स्वं महाहर्म्यमवापुरेते ॥ ६ ॥

एकोऽपि दोषो यदि सूक्ष्मदृष्ट्या
  दृष्टस्त्वया तत्र मदीयनृत्ते ।
तं ब्रूहि जिष्णो सदयं ममाद्य
  त्वं चापि दक्षः किल नाट्यशास्त्रे ॥ ७ ॥

यत्ताण्डवं पाण्डव चित्रसेना-
  त्त्वया गृहीतं किल सावधानम् ।
अहं त्विदानीमनुकर्तुकामा
  त्वयैव सार्धं शिवताण्डवं तत् ॥ ८ ॥

पितुर्नियोगात्तव चित्रसेनो
  ममान्तिकं प्राप्य जगाद जिष्णो ।
सहस्रचक्षोरभिलाष एषः
  संपादि पार्थं सुभगे प्रियं तम् ॥ ९ ॥

तस्माद्गुडाकेश समागताऽहं
  शुश्रूषितुं त्वामिह सन्निधाने ।
आकृष्टचित्ता वशमागता ते
  श्रुत्वा गुणान्सुन्दर सुन्दराङ्ग ॥ १० ॥

तदेह्यनुज्ञामुपसेवितुं त्वां
पितुर्वचो मानयितव्य एव ।
कान्ताक्षिणी ते त्वयि कर्षतो मा-
मानन्दयत्याननमायताक्ष ॥ ११ ॥

अमङ्गलं मङ्गलकर्मकर्त्रा
देवाङ्गनावाक्यमिदं सलज्जम् ।
आकर्ण्य पार्थः स पिधाय कर्णौ
सप्राञ्जलिस्त्वेवमवोचदेनाम् ॥ १२ ॥

वरानने त्वं गुरुदारतुल्या
तस्मादनर्हा भवसि प्रवक्तुम् ।
तद्दुःश्रुतं मे वचनं तवाम्ब
यन्मां ब्रवीपि त्वमनङ्गतप्ता ॥ १३ ॥

यदा तु कुन्ती बहुमान्यमाता
देवेन्द्रपत्नी च शची यथा मे ।
तथा त्वमप्यम्ब मयाऽतिमान्या
सदापि पूज्या पुरुवंशदेवी ॥ १४ ॥

निष्पन्ददृग्भ्यामवलोकिता त्वं
कामं विशेषेण मयाऽम्ब तत्र ।
नप्त्रा हि मान्या पुरुवंशमाता
सा वन्दनीयाऽत्र सदेति हेतोः ॥ १५ ॥

मामन्यथा धारयितुं सुमान्ये
कल्याणि नार्हस्यमरेशवाचा ।
अचिन्तनीयोऽहमनङ्गचेतसा
क्षमस्व मामित्यत एव याचे ॥ १६ ॥

धर्मात्मजस्तस्य सहोदराश्च
धर्मेषु सक्ताः सततं च धीराः ।
मोहेन वा मन्मथचिन्तया वा
न ते कदापि प्रचलन्ति धर्मात् ॥ १७ ॥

तवानुरागं किमु युक्तमेत-
न्मय्यर्भके ते मदनोत्सवार्थम् ।
दिव्ये तवाहं वद किं न नप्ता
दिव्यैरकार्यं किमिदं न कर्म ॥ १८ ॥

पार्थस्य वाचा सुरसुन्दरी सा
प्ररूढरागेण विवेकहीना ।
उन्मत्तचित्तेव विलोकयन्ती
पार्थं बभाषेदमनार्यजुष्टम् ॥ १९ ॥

स्थाने गुरोर्मामपि योक्तुमेना-
मार्तां नरव्याघ्र सुरालयेऽस्मिन् ।
अर्होऽसि किं त्यक्तुमपीह जिष्णो
कुठारविद्धामिव विद्धि पार्थ ॥ २० ॥

स्वर्गे महान्तः पुरुवंशपुत्रा-
स्तपोभिरस्मान् रमयन्ति दीर्घम् ।
मां सुन्दराङ्ग स्मरबाधिताङ्गाम्
मान्य त्वमप्यत्र समेहि तस्मात् ॥ २१ ॥

यो यो भुवः स्वर्गतलं प्रविष्ट-
स्तं तं व्रजामि स्वयमेव धन्यम् ।
स्वर्लोकसम्भोगसुखं प्रदातु-
मस्माकमेतद्विहितं हितं च ॥ २२ ॥

मथ्नाति मर्म स्मरबाणराशि-
स्त्वत्तः समुद्भूय विशन्मनो मे ।
इमां दहत्येव स एव नूनं
पुरारिदग्धोऽपि पुरा स्मरो यः ॥ २३ ॥

मनोभवेनातितरां महात्म-
न्नार्ता त्वया नाहमुपेक्षणीया ।
कामानुरूपां च कदर्थनाया
मत्प्रार्थनां त्वं न निराकुरुष्व ॥ २४ ॥

शक्रोपकार्यामरोपकार्या-
त्समागतोऽसौ न रतोत्सवार्थम् ।
अनङ्गतप्ता विजयान्तराङ्गं
कथं निमोधेत्कथिताध्वनेन ॥ २५ ॥

अतुल्यरागादतिजृम्भमाणा
सुरातिमत्तेव सुराङ्गना सा ।
आरोहणार्थं मदनाग्रसौधं
समभ्यगात्पार्थमसह्यरागा ॥ २६ ॥

वक्षोरुहाभ्यां मदनाशुगाभ्यां
जगाम वेगाद्विजयातुरा तम् ।
प्रयोगदोषात्प्रतियोगिना सा
विसृष्टलक्ष्या विनिपातिता च ॥ २७ ॥

तां रन्तुकामाममुनातिदीर्घं
धर्मी जगादाथ यथार्थवक्ता ।
विवेकहीनां स विवेकयुक्तो
धर्मानुसारं सुखबोधनार्थम् ॥ २८ ॥

विवेकचिन्ता सुरतोत्सवेषु
सुतेति मातेति सहोदरीति ।
सर्वेष्वमर्त्येष्वपि नैव नूनं
संदृश्यते मन्मथबाधितेषु ॥ २९ ॥

विनिर्गतं ते वदनादपीत्थं
ध्रुवं त्वयोक्तं न सुराङ्गने तत् ।
जानाम्यहं मन्मथबाधितां त्वां
मन्ये तदुक्तं मदनेन तस्मात् ॥ ३० ॥

शृण्वन्तु सर्वे मम सत्यवाक्यं
दिक्पालकाः स्वर्गनिवासिनश्च ।
त्वं माननीया जननीव कुन्ती
शचीव माद्रीव गरीयसी मे ॥ ३१ ॥

पूज्या शुभे त्वं मम मातृतुल्या
रक्ष्यस्त्वयाहं सुतवत्सदापि
मूर्ध्ना प्रपन्नोऽस्मि तवाङ्घ्रिपद्मे
क्षमस्व मामम्ब दयार्द्रचित्ते ॥ ३२ ॥

एतद्वचस्तस्य यथार्थवक्तुः
श्रुत्वा भृशं भग्नमनोरथा सा ।
स्फुलिङ्गनेत्रा स्फुरिताधरोष्ठा
क्रोधादवोचत्किल तीक्ष्णवाचम् ॥ ३३ ॥

यथा त्वया न त्वभिनन्दिताऽहं
सौन्दर्यगर्वेण समागता त्वाम् ।
तथा पिता ते बहुमाननीयो
न कर्मणा निर्घृण मानितोऽसौ ॥ ३४ ॥

भूत्वैव तस्मादपुमांश्च पण्डो
मान्योऽपि सर्वत्र तु मानहीनः ।
स्त्रीणां तु मध्ये शठ नर्तकः सन्
विहाय लज्जां विहरिष्यसि त्वम् ॥ ३५ ॥

अभ्यर्थना फाल्गुन धिक्कृता मे
पितुश्च वाचस्त्ववधीरितास्ते ।
अतोऽस्य पार्थाविनयस्य शीघ्रं
फलं त्वया नूनमवाप्यमेव ॥ ३६ ॥

शप्त्वा प्रगल्भेत्थमथोर्वशी तं
रुषाऽर्जुनं धर्मिणमिन्द्रसूनुम् ।
अधोमुखी सा निलयं ययौ स्वं
भग्नाशया फाल्गुनभग्नगर्वा ॥ ३७ ॥

त्यक्तेव नाथेन यथाऽविनीता
निन्द्या प्रियैश्चापि जनैरनाथा ।
मत्तेभराजेन वने वशेव
भ्रष्टा चलन्त्यास्त सुराङ्गनाऽपि ॥ ३८ ॥

सोमोपरागेव विरागसन्ध्या
प्रणष्टपुष्पेव च पुष्पशाखा ।
भग्नाशयाऽप्सरसां वरिष्ठा
बभूव सद्यैव विनष्टशोभा ॥ ३९ ॥

कथं कथंचिद्रजनीं विनिद्र-
श्चिन्ताकुलः कुन्तिसुतस्तु नीत्वा ।
प्रातः समुत्थाय महान्प्रपेदे
स चित्रसेनस्य विचित्रगेहम् ॥ ४० ॥

तथाऽक्षमस्तं समुपेत्य वेगा-
द्विनीतभावो विजयो विषण्णः ।
यथैव देवाङ्गनया समस्तं
निवेदयामास निशि प्रवृत्तम् ॥ ४१ ॥

गन्धर्वराजोऽपि यथाश्रुतं त-
त्सुरेन्द्रसूनोर्वदनादशेषम् ।
तथैव तस्मै महते मघोने
न्यवेदयत्तत्क्षणमेव वाचा ॥ ४२ ॥

आनाय्य सद्यस्तनयं सुरेशो
दृढं परिष्वज्य मुहुर्मुहुश्च ।
तं सान्त्वयित्वा स शुभैर्वचोभिः
सविस्मयः पार्थमभापतेत्थम् ॥ ४३ ॥

तानुर्वशी पुत्र पुरूरवादी-
न्मायामयैरीक्षणविभ्रमैर्या ।
महर्षिवर्यांश्च वशीचकार
वशीकृता सा त्वयि सुन्दराङ्गे ॥ ४४ ॥

यतीन्समस्तान्विबुधांश्च मर्त्या-
ञ्जेतुं सुशक्तेत्यतिगर्वयुक्ता ।
सम्प्रेषिता पुत्र मयैव रात्रौ
तद्दर्पभङ्गाय तवान्तिकं सा ॥ ४५ ॥

एकेन मर्त्येन सुराङ्गना सा
पराजितेत्यत्र समस्तदेवाः ।
मर्त्या महान्तो ऋषयश्च पार्थ
त्वामेव शंसन्त्यतिविस्मितास्ते ॥ ४६ ॥

न केवलं साऽप्सरसां वरिष्ठा
जिताऽत्र मन्ये किल कर्मणा ते ।
परं तु सर्वेऽपि पराजितास्ते
महर्षयो ये च जितास्तथैव ॥ ४७ ॥

शापेन तस्याः सुरयोषितस्तु
न दुःखितव्यं विजय त्वयाऽद्य ।
शापोऽप्ययं नूनमनुग्रहाय
जाने भवेत्ते किल भाविकाले ॥ ४८ ॥

कौन्तेय संवत्सरमेकमुर्व्या-
मज्ञातवासस्त्वयि वासितव्यः ।
सहोदरैः साकमतीव गूढं
नामान्तरेणैवं विराटराज्ये ॥ ४९ ॥

एतन्नपुंसत्वेन विलासिनीनां
मध्ये वसेस्त्वं विधिवैपरीत्यात् ।
तद्राजपुत्र्याः गुरुवत्प्रशान्तः
प्रवर्तयन्वर्षमशेषमेव ॥ ५० ॥

चर्यावसाने तव पूर्वरूपं
त्वमाप्नुयाः शापविमोचनं च ।
तस्माद्विषण्णः प्रियपुत्र मा भूः
ध्रुवं भवत्येव विधेर्विलासः ॥ ५१ ॥

पार्थप्रवृत्तं शृणुते पुमान्यः
सश्रद्धमेतत्किल निष्कलङ्कः ।
कामेषु पापेष्वपि मर्त्यलोके
प्रवर्तते नास्य कदापि चित्तम् ॥ ५२ ॥

इदं पितुः सान्त्वनमिन्द्रसूनु-
र्निशम्य वाक्यं निखिलं मघोनः ।
मुदान्वितोऽयं न्यवसत्ततोऽस्मिन्
लोके सगन्धर्वपतिः सुराणाम् ॥ ५३ ॥

अटन्नथोऽर्यामतिसूक्ष्मबुद्धिः
स लोमशो नाम महर्षिवर्यः ।
महान्मघोनः किल तं महेन्द्रं
सन्द्रष्टुकामः सदनं विवेश ॥ ५४ ॥

उपेत्य भक्त्या तमुदारकीर्तिः
संसेवितं देवगणैः सभास्थम् ।
शतक्रतुं तत्र शचीसमेतं
ननाम मूर्ध्ना मुनिपुङ्गवोऽसौ ॥ ५५ ॥

संपूज्यमानो बहुमानपूर्वं
महर्षिवर्यैः स महर्षिवर्यः ।
शक्राभ्यनुज्ञामनुसृत्य सद्यः
पूज्यासनं तत्र समाससाद ॥ ५६ ॥

वृषाधिरूढेशविशाखतुल्या-
वेकासनासीनवृषार्जुनौ तौ ।
महामुनिस्तत्र महाप्रभावौ
दृष्ट्वा महाश्चर्यमवाप सद्यः ॥ ५७ ॥

पार्थः कथं क्षत्रियवंशजोऽय-
मर्धासनं देवपतेरवाप ।
वन्द्यं पदं दिव्यजनैश्च सर्वैः
सुकर्म किं तेन कृतं तदाप्तुम् ॥ ५८ ॥

तथाविधान्तःकरणप्रवृत्तिं
सद्यो विदित्वा मघवान्महर्षेः ।
समाचचक्षे प्रहसन्वचांसि
तदीयसन्देहनिवारणार्थम् ॥ ५९ ॥

शृणोतु कल्याणमते महर्षे
विवक्षितां वाचमिमां विवेकिन् ।
नरोत्तमं वेत्तु द्विजोत्तमैनं
जातं च कुन्त्यां विजयं सुतं मे ॥ ६० ॥

अवाप्तुमस्त्राण्ययमागतोऽस्ति
नृणां तु लोकात्किल देवलोकम् ।
अन्यन्महाकारणमस्ति किंचि-
न्मघात्मजस्यागमने महात्मन् ॥ ६१ ॥

नरश्च नारायण इत्यतुल्यौ
ख्यातौ महान्तौ मुनिपुङ्गवौ तौ ।
अवेहि लोकेष्वखिलेषु पूज्यौ
गुणैरनेकैरुपशोभमानौ ॥ ६२ ॥

ऋषेऽवतीर्णौ ऋषिसत्तमौ तौ
पुण्याश्रयायां भुवि पूज्यमानौ ।
लोकादपाकष्टुमधार्मिकांश्च
लोके स्वयं स्थापयितुं स्वधर्मान् ॥ ६३ ॥

अतुल्यभावौ बदरीति नाम्नि
पवित्रभूमेरधुना प्रशस्ते ।
आस्तां वसन्तौ महतां निवासे
प्रख्यातवीर्यौ मुनिपुङ्गवौ तौ ॥ ६४ ॥

भागीरथी पापविनाशिनी सा
पुण्यप्रवाहा वहतीह वारि ।
अयं तु रम्यः परितः प्रदेशः
संसेवितं चारणसिद्धसङ्घैः ॥ ६५ ॥

संहृत्य दैत्यानखिलांश्च दुष्टा-
न्स्वधर्मनिष्ठानवितुं च साधून् ।
पुण्याश्रयेऽस्मिन्किल पुण्यभूमे-
र्मुनेऽवतीर्णौ जनरक्षकौ तौ ॥ ६६ ॥

महात्मभिर्द्रष्टुमशक्यमेत-
त्सुरैस्तथा दिव्यशरीरवद्भिः ।
पदं पृथिव्यामधुनाऽस्ति तीर्थं
विष्णोश्च जिष्णोरधिवासहेतोः ॥ ६७ ॥

पुराणनारायणमेव कृष्णं
नरं गुडाकेशममुं च धीरम् ।
अवेहि साधो महतोश्च जन्म
सत्यं पृथिव्याः परिपालनाय ॥ ६८ ॥

अद्यापि लोकान्परिपीडयन्तो
वर्तन्त एवातिबलास्तु दैत्याः ।
निहन्ति मर्त्यानुपहन्ति देवान्
हिंसन्ति साधून्वनितास्तथा च ॥ ६९ ॥

रुद्रादनोराप्तमहाबलास्ते
पुत्रा मुनेर्दत्तवरास्तु दैत्याः ।
अस्माञ्जिहन्तुं किल तर्कयन्तो
भ्रमन्ति लोकान्किल कम्पयन्तः ॥ ७० ॥

दैत्यानमून्दृप्तवरान्प्रमत्तान्-
शक्तान् वयं योधयितुं न शक्ताः ।
तीक्ष्णोऽपि वज्रो मम वृत्रहन्तु-
रकुण्ठितोऽप्यस्ति सकुण्ठितोऽद्य ॥ ७१ ॥

प्रचेतसः पाणितले स पाशो
विनष्टवीर्यो मृतसर्पकल्पः ।
यमस्य दण्डोऽप्यधुना विना ता-
ममोघशक्तिं भवतो मुधैव ॥ ७२ ॥

समीरणो मन्दगतिः सदापि
नियम्य वेगं विनयात्प्रयाति ।
तपन्ति मित्रास्तपनत्वहीना
दिनान्तशोभा इव दृश्यमानाः ॥ ७३ ॥

कुचेलवत् सोऽपि कुबेरदेवो
विनष्टसारोऽस्ति विवर्णभावः ।
विपत्रशाखः फलपुष्पहीनो
वृक्षो यथा भाति निदाघकाले ॥ ७४ ॥

विमानयानानि विना प्रकाशं
वृथाऽऽसते विप्र रथाङ्गणेषु ।
इमे सुराः व्योम्नि चरन्ति तूर्णीं
विघातभीत्या पथि दानवेभ्यः ॥ ७५ ॥

अस्माकमद्य द्विज दिव्यशक्ति-
   र्नरैस्तु तेषामुपरक्तवीर्या ।
नालं फलं दातुमतः किलेयं
   ग्रहोपरक्तेव शशाङ्कशोभा ॥ ७६ ॥

ममात्मजे तिष्ठति मत्समीपे
   व्रजेम कृष्णं तु वयं किमर्थम् ।
घृताभिलाषी किमु याचते घृतं
   नरो यदि स्यान्नवनीतहस्तः ॥ ७७ ॥

संसेवितायां बहुभिः सभायां
   तान् हन्तुमेकोऽप्ययमेव शक्तः ।
एकः शशी हन्ति तमो रजन्यां
   सहस्रनक्षत्रसमावृतायाम् ॥ ७८ ॥

अल्पेन कार्येण न च प्रबोध्यः
   स तेजसां राशिरनन्तशायी ।
येनैव दग्धाः सगरस्य पुत्रा
   जगत्प्रदहेद्यदि स प्रबुद्धः ॥ ७९ ॥

योद्धारमेनं युधि यातुधानाः
   महास्त्रशस्त्राण्यपि तस्य मन्दाः ।
दस्यास्तथा पाशुपतास्त्रशक्ति
   न दद्युरन्तः किल दुष्टचित्ताः ॥ ८० ॥

पञ्चास्य एकोऽपि पवन्मृगेन्द्रो
मत्ताननेकान्महिपान्निहन्ति ।
एकोऽपि जिष्णुश्च सहस्रसंख्यान्
परान्निपात्य प्रसभं निहन्ति ॥ ८१ ॥

जिघांसवो देवकुलं समूल-
मेतत्तु तत्त्वं न विदन्ति दैत्याः ।
स्वयं निहन्येत स पूतनाव-
द्द्रोहं चिकीर्षुः किल यः परस्य ॥ ८२ ॥

एतेषु निन्द्यचरितेषु निशाचरास्ते
नीचैर्निवातकवचैः किल नीयमानाः ।
अस्यास्त्रशक्तिमचिरादवलोकयन्तु
लोके सतामनिशमप्रियमाचरन्तः ॥ ८३ ॥

एतैर्निवातकवचैः क्रियते सुराणां
रौद्रादनोः प्रियसुतैरतिविप्रियं नः ।
सहेत तत्कथय विप्र कथं प्रकारं
शान्तिस्तपोधन कथं मनसस्तु लभ्या ॥ ८४ ॥

किं चात्र लोमशमुनिं बहुमान्यपात्रं
मत्वा सहायममुमेव सहस्रनेत्रः ।
साहाय्यमार्द्रहृदयाय युधिष्ठिराय
तस्मै चिकीर्षुरिदमेनमुवाच वाक्यम् ॥ ८५ ॥

संप्राप्य पुण्यभुवमद्य महानुभाव
धर्मस्य मूर्तिमुपगच्छतु धर्मपुत्रम् ।
आलोक्य काम्यकवने निवसन्तमार्यं
वाक्यैः प्रसान्त्वयतु तं मम धर्मवीरम् ॥ ८६ ॥

द्यूते तथा विधिबलात्तु विनष्टराज्यं
दृष्ट्वा युधिष्ठिरमटन्तमसुं वनेषु ।
गङ्गाधरः करुणया किल निश्चिकाय
धर्मं च धर्मतनयं परिरक्षितुं सः ॥ ८७ ॥

संस्थापनार्थमवनौ किल धर्मबुद्धिं
सद्धृत्तरवयं सुरगणाः सुजनावनार्थम् ।
संप्रेरयन्ति सततं मनुजान्प्रवृत्तौ
शक्तिप्रवाहजनितास्त्रिगुणात्मिकायाः ॥ ८८ ॥

पश्चात्प्रचोदयतु सौम्यवचोभिरार्यं
पार्थात्तथा विरहिणं विपिने वसन्तम् ।
तीर्थाटनाय च भवाननुजैः समेतं
धर्मात्मजं हृदयपापविनाशनार्थम् ॥ ८९ ॥

दिव्यास्त्रशस्त्रनिचयं सुपरीक्ष्य धीरः
सम्यक् निवातकवचेषु निशाचरेषु ।
द्रष्टुं गमिष्यति ध्रुवं स्वसहोदरादी-
न्कीर्त्या दिवस्तु विजयो विजयश्रियैव ॥ ९० ॥

आकर्ण्य लोमशमुनिर्वचनामृतं त-
दाखण्डलस्य वचनं शिरसा वहन् सन् ।
आपृच्छ्य सादरमसौ सुरलोकनाथ-
मालोकयद्विजयमर्थदृशा मुहूर्तम् ॥ ९१ ॥

सभ्रातरं मम दयालुमजातशत्रुं
संत्रायतां सततमेव तव प्रभावात् ।
बीभत्सुनापि महता मुनिरित्थमुक्तः
काम्यं तु काम्यकवनं तदनु प्रतस्थे ॥ ९२ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
सप्तमः सर्गः ॥

## अष्टमः सर्गः ।

सुरलोकगतं द्विजोत्तमा-
दथ कस्मादपि योगिसत्तमात् ।
अशृणोदमरेशसंभवं
स तु गाण्डीविनमम्बिकासुतः ॥ १ ॥

अत एव विमर्शयन्सुतान्
विजयं चात्मनि चिन्तयन्नसौ ।
नितरां निशि दुःखितो भव-
न्नुपपेदे शयनं शनैः शनैः ॥ २ ॥

पुरुषं कलुषीकृतं कथं
निशि निद्राप्युपगच्छति स्वयम् ।
कथमप्यतिदुःखमानसः
स चिरेण स्वपितुं प्रचक्रमे ॥ ३ ॥

सहसा विधिना समुत्थितो
धृतराष्ट्रः शयनान्निशात्यये ।
सभयः समुपाविशत्तथा
चिरमुन्मील्य दृशौ महीतले ॥ ४ ॥

सविधे तमदर्शमुखे नृपः
स्वयमाहूय तदैव सञ्जयम् ।
अवदन्निशि दृष्टमात्मना
सकलं स्वप्नममुं भयानकम् ॥ ५ ॥

अधुनाऽवहितेन सारथे
निशि तत्स्वप्नमवेक्षितं मया ।
शृणु मुण्डशिरोभिरध्वना
तनया मे नगराद्बहिर्गताः ॥ ६ ॥

दृढशृङ्खलया च पञ्चभिः
पथि बद्धाः सुदृढैरनन्तरम् ।
अथ पञ्चशिरोभिराशुगै-
रपि सर्वैः पशुमारमाहताः ॥ ७ ॥

कथयत्यधुनातिदुःसहा
हृदयं स्वप्नकृताऽपि वेदना ।
कदली तरलीकृता भवे-
न्नितरां प्रावृषि चण्डवायुना ॥ ८ ॥

अधिकृत्य सुरेन्द्रनन्दनं
विजयं प्रष्टुमभीहते मनः ।
अमरैरभिनन्द्यमर्जुनं
सुरलोकस्यसुखान्वितं सुतम् ॥ ९ ॥

अपि तथ्यमिदं वचो मया
श्रुतमिन्द्रात्मजकर्म सारथे ।
अमरैरपि यत्प्रशंसितं
सुतरां श्लाघितमिन्दुमौलिना ॥ १० ॥

युधि सत्यपराक्रमः सुधी-
विजयो यस्य सखा श्रियः पतिः ।
विजयाद्विजयान्तरं सदा
विजयेनैव स नीयते महान् ॥ ११ ॥

तनयोऽप्यधुना सुयोधनो
मम दुर्योधन एव कर्मणा ।
अचिरात्तु विनाशयिष्यति
क्षितिमेव स्वयमात्मदुश्चिभिः ॥ १२ ॥

अतिदुष्टसखस्तु मन्दधी-
र्मम पुत्रो न कदाप्ययं भवेत् ।
स तु पुत्रकात्सुयोधनः
पितरं त्रातुमशक्त इत्यतः ॥ १३ ॥

अवलोक्य शिताशसंचयं
सहसाऽऽयन्तममुं धनंजयम् ।
स तु मृत्युरपि स्वयं रणा-
द्विजयेच्छां विजहाति तत्क्षणात् ॥ १४ ॥

कृपभीष्ममहारथान्वितं
स शरैर्मृत्युरमुं सुयोधनम् ।
समुपैति पुरा विना श्रमं
युधि सभ्रातरमर्जुनात्सतः । १५ ॥

अतिमोहवचोभिरात्मजं
त्वयि पापिन्सुवशीकृतं त्वया ।
अपि मृत्युमुखे सुदारुणे
शकुने क्षिप्तमिवाद्य वेद्मि तम् ॥ १६ ॥

अतिदिव्यशरानमर्षिणः
कठिनान्वारयितुं दृढात्मनः ।
विजयस्य न शक्नुवन्ति ता-
नपि भीष्मप्रमुखा महारथाः ॥ १७ ॥

विजयस्य कदापि विद्यते
न तु हन्ता त्रिजगत्सु वीर्यवान् ।
पुरुहूतसुतोपमः कचि-
न्न तु जेतापि तथास्य वर्तते ॥ १८ ॥

शकुनिर्मम सन्ततेः सुहृ-
द्विजयस्यास्ति स देवकीसुतः ।
भुवि संभवतस्तु संगता-
द्गुणदोषौ च जयाजयौ नृणाम् ॥ १९ ॥

स तु पार्थशरैः प्रविश्य मे
तनयान्हन्तुमशेषमाहवे ।
ध्रुवमाविशतीव पाण्डवा-
निति तं मृत्युमवैमि सारथे ॥ २० ॥

अतिवीरपराक्रमेष्विमे
  कृपभीष्मप्रमुखेषु पाण्डवाः ।
विजयश्रियमाप्नुयू रणे
  विजयेनैव युधिष्ठिरादयः ॥ २१ ॥

सुपराजयगर्तवर्तिनो
  मधुवाग्भिः शकुनेर्वशं गताः ।
तनया मृगतृष्णिकासु मे
  भ्रममाणा जयमाप्नुयुः कथम् ॥ २२ ॥

सकुलं रभसा नयत्यसौ
  मम सूनुर्जगदन्तरं जनम् ।
विजयस्य सखा भवेद्यदि
  ध्रुवमाप्नोति स सर्वसम्पदम् ॥ २३ ॥

भुवि यस्य नरस्य धीमतो
  यदि कृष्णोऽस्त्यथवार्जुनः सखा ।
तमुपैति मुदान्विता स्वय
  विजयश्रीरपि भूतिनीतिभिः ॥ २४ ॥

द्विजरूपमहाग्नये शरैः-
  रतिवृष्टिं स निवारयन्पुरा ।
विजयस्तु विजित्य वासवं
  प्रददौ तन्नु खाण्डवं वनम् ॥ २५ ॥

नयने निबबन्ध वाससा
 न तु मामन्धमवेक्ष्य मे धवा ।
अनवेक्षितुमेव दुष्कृतिं
 तनयानामतिदुष्टचेतसाम् ॥ २६ ॥

विकिरन्किरणान् रविर्यथा
 कृमिकीटान्दहतीह भूतले ।
विजयेन विसृष्टसायका
 अभिधक्ष्यन्ति ममात्मजान् तथा ॥ २७ ॥

प्रतिभाति सुयोधनस्य सा
 सुविदीर्णेव सुतस्य मे चमूः ।
महताऽतिभयेन विह्वला
 रथघोषेण तु सव्यसाचिनः ॥ २८ ॥

विसृजन्विजयो यदा शरा-
 न्समरे तिष्ठति दृश्यते तदा ।
भुवने सृजतीव विश्वदृक्
 मनसा सर्वहरं तपन्तकम् ॥ २९ ॥

मयि निर्दय एव विश्वसृक्
 धुवमन्धौ पितरौ विलोकय नौ ।
तनयेभ्य इव स्वयं प्रभुः
 स मदान्धरसपदादनन्तरम् ॥ ३० ॥

समवीरपराक्रमान्विता
  विलसन्त्येव तु पञ्चपाण्डवाः ।
मम सूनुषु फाल्गुनोपमः
  ध्रुवमेकोऽपि न दृश्यते मया ॥ ३१ ॥

स तु मूर्खशताद्गुणी सुतो
  वरमेकोऽपि सदैव सारथे ।
मम दुष्टसुतेषु पापिषु
  सगुणः कोऽपि न दृश्यते सुतः ॥ ३२ ॥

हृदि शान्तिमवाप्नुयां कथं
  मम दुष्टेषु सुतेषु सत्स्वहम् ।
कथमात्मसुखं तदा भवे-
  द्यदि शान्तिर्न तु लभ्यते जनैः ॥ ३३ ॥

स निशम्य महीपतेर्मुखाद्-
  गलितं तद्धृदयस्पृशं वचः ।
विलपन्तममुं महामतिः
  सदयं वाचमुवाच संजयः ॥ ३४ ॥

निखिलं कथितं त्वया प्रभो
  तव सूनुं प्रति सत्यमेव तत् ।
सुतरां किल सत्यमेव त-
  द्विजयं प्रत्यपि यच्छ्रुतं त्वया ॥ ३५ ॥

अधुना शपथैर्वनावनी
निवसन्तः सह कान्तया च ते ।
विधिनैव नयन्ति वासरा-
न्भृशमैक्येन युधिष्ठिरादयः ॥ ३६ ॥

श्लथलम्बिकचं पतिव्रता
न तु बध्नात्यधुनापि मानिनी ।
रणघोषमुदीरयन् रुषा
भुवि भीमोऽपि गदां वहत्यसौ ॥ ३७ ॥

तपसे विजयो न्ययुज्यत
स्तत एवायमजातशत्रुणा ।
स दहत्यखिलां भुवं रुषा
सति तस्मिन्कुपिते युधिष्ठिरे ॥ ३८ ॥

महतां पुरतो यशस्विनीं
तव पुत्रैरपमानितां सतीम् ।
न तु विस्मर तां पतिव्रता-
मपि दुःशासनपाणिदूषिताम् ॥ ३९ ॥

महता शपथत्रयं कृतं
बलभीमेन तु भीकरस्वनैः ।
इतरैरपि गर्जनैस्तदा
शपथस्तद्वदरिंदमैः कृतः ॥ ४० ॥

स विकर्णमतीव भर्त्सयं-
  स्तनु कर्णोऽपि जुगुप्सितं वचः ।
व्यसृजद्गरलं फणी यथा
  तत्र सूनूननुमोदयंस्तदा ॥ ४१ ॥

अतिपङ्किलमप्यधः सरो
  बहिरामात्यतिनिर्मलं यथा ।
हृदयं तव वर्तते तथा
  प्रविजानन्ति च पाण्डुनन्दनाः ॥ ४२ ॥

अपि च शृणु पार्थपौरुषं
  यदुमावल्लभमप्यतोषयत् ।
विजयस्य तपोवनं महा-
  नुमया सार्धमुपागमच्छिवः ॥ ४३ ॥

उपगम्य किरातवद्धरो
  विजयं वीक्ष्य जयाय संदधे ।
अवितुं निजभक्तमक्षमो
  विनिहन्तुं स च मूकदानवम् ॥ ४४ ॥

तुमुलं हरपार्थयोर्मिथ-
  स्तवनयोर्जन्यमभूद्गिरौ तदा ।
विजयस्य पराक्रमं दृढं
  ददृशुस्तस्य दिशां च पालकाः ॥ ४५ ॥

हृतमस्त्रमशेषमप्यसौ
धनुषा शम्भुमताडयद्रुषा ।
समयं चकिताश्चकम्पिरे
शशिभागीरथिजीविनस्तदा ॥ ४६ ॥

उमया सह चन्द्रशेखरं
ननु साक्षात्पुरतः कपर्दिनम् ।
स ददर्श परंतपो गिरा-
वपि चालिङ्गित एव शम्भुना ॥ ४७ ॥

अभिनन्द्य परंतपं हरः
प्रहरान्ते प्रददौ दयापरः ।
स तु पाशुपतास्त्रमात्मन-
स्तदमोघं स्वयमिन्द्रसूनवे ॥ ४८ ॥

निजवामकरेण वीर्यवा-
न्निपुणो दक्षिणपाणिना यथा ।
विजयः खलु बाणमुक्तये
विलसत्येव पिनाकधृक्समः ॥ ४९ ॥

द्रुपदस्य सुतां तत्रात्मजैः
परिकर्षद्भिरतीव साहसात् ।
अतिघोरमहाहवं बला-
त्परिकृष्टं किल लोमहर्षणम् ॥ ५० ॥

विविधास्त्रविदस्तु पाण्डवाः
तनयानां तव दुष्टकर्मणाम् ।
अमरैरपि दुर्जयाः प्रभो
सुकरिष्यन्ति दुरन्तमाहवे ॥ ५१ ॥

यदकार्यमिह स्वयं कृतं
भुवने येन सतां विघातये ।
भवति ध्रुवमेव कर्म त-
त्कथमन्यस्य विनाशकारणम् ॥ ५२ ॥

असहायसतीं विलोकय-
न्स तु तेषां च महात्मनां तदा ।
सविधे तव निन्द्यनन्दनो
निजवामोरुमदर्शयत्किल ॥ ५३ ॥

अधुना भुवनैकनाथ ते
करुणां दर्शय हा कृपानिधे ।
इदमार्तवचस्तया कृतं
भवतापि श्रुतमेव भूपते ॥ ५४ ॥

तनयस्य वृथाऽभवत्प्रभो
रचितोपायसमस्तमेव तत् ।
भयतस्तनयैर्न भूपते
भवतन्त्रैस्तु नियम्यते जगत् ॥ ५५ ॥

विषमोऽयमकारयत्सुतो-
विनिहन्तुं स वृथा वृकोदरम् ।
शिलया सह संनिबध्य तं
तदनु न्यक्षिपदापगाम्बुधौ ॥ ५६ ॥

अथ नागपतिप्रपोषितः
स तु नागायुतशक्तिमाप्तवान् ।
उदकादुदगच्छदक्षतः
सुदिनेऽष्टादशमे स मारुतिः ॥ ५७ ॥

दृढनक्रमुखात्परंतपः
स्वगुरुं मोचितवांस्तमेकदा ।
परितुष्टमहागुरोस्तदा
विजयो ब्राह्ममहास्त्रमाप्तवान् ॥ ५८ ॥

जतुवासगृहे सुयोधनः
स तु नक्तं यतते स्म वह्निना ।
स्वपितृव्यकुलं दयां विना
निखिलं दाहयितुं च मन्दधीः ॥ ५९ ॥

विपरीतफलद्वयं प्रभो
तनयेभ्यस्तददात्परं तु ते ।
स हिडिम्बबकासुरावहन्
पशुमारं सुलभं वृकोदरः ॥ ६० ॥

अपरं च तयोर्द्वयोः फलं
शृणु सम्पादितमर्जुनेन तत् ।
द्रुपदस्य सुतामवाप्तवान्
स तु दोर्वीर्यपरीक्षया तदा ॥ ६१ ॥

स चकार पलायनं जवात्
ननु कर्णोऽपि पराजितस्तथा ।
अमुना विजयेन संभवे-
दिति राधेयवधोऽपि सूचितः ॥ ६२ ॥

त्वमपीदृशकर्मसु ध्रुवं
निजसाहाय्यमदाः स्वसूनवे ।
तव मानयितुं वचस्तदा
ननु पार्था जतुमन्दिरं गताः ॥ ६३ ॥

अचिरादतिदोषमाप्नुया-
स्त्वसुतादिष्वतिलालनात्पुमान् ।
अतिदिव्यफलाभिवाञ्छया
विषवृक्षाः किल वर्धितास्त्वया ॥ ६४ ॥

स वसत्यरिसार्थसार्थकी-
कृतनामानमतुल्यमात्मजम् ।
मरुतोऽपि गरुत्मवर्त्मनि
प्रियमुद्वीक्ष्य पराक्रमं स्तुवन् ॥ ६५ ॥

अतुलप्रभया कुतूहला-
दमरेशोऽपि सुतस्य पौरुषम् ।
विजयाहवमेव चिन्तयन्
विजयाशंसमनूच्य वर्तते ॥ ६६ ॥

सुखसङ्गमवेक्ष्य सङ्गरं
विजयश्रीर्वृणुते वृकोदरम् ।
सुरते कृतनिश्चया कथं
वरमालोक्य जहाति विभ्रमम् ॥ ६७ ॥

निजबोधमुपेत्य तत्क्षणा-
दिदमाकर्ण्य वचोऽर्थनिर्भरम् ।
इदमाह विषण्णमानसो
धृतराष्ट्रस्तु महीपतिस्तदा ॥ ६८ ॥

न तु मामतिविद्धमानसं
प्रहर त्वं शितवाक्शरैः पुनः ।
हृदयं दृढमप्यतीव त-
न्ननु संमर्दवशात्सुभिद्यते ॥ ६९ ॥

अतिमन्दधियस्तु मन्त्रिणो
निखिलाः सौबलकादयस्त्वमी ।
मम पुत्रविनाशहेतव-
स्त्विति निःसंशयमेव संजय ॥ ७० ॥

दिवि वा भुवि वा कपिध्वजः
न तु वेत्ति स्वपराजयं क्वचित् ।
भवति स्वसुतस्तु दुर्मति-
र्ननु सर्वत्र पराजितः परैः ॥ ७१ ॥

स्वमदान्धतया सुयोधनो
वचनान्यात्मसुतोऽपि मे सदा ।
स मदन्धतया च मन्दभाक्
न च शुश्रूषति दुष्टसौहृदात् ॥ ७२ ॥

पार्थेनामिततेजसा शितशराः स्वैरं विमुक्तास्त्वपि
नीयासुर्निधनं मदान्धतनयानन्धस्य मे निश्चितम् ।
सम्यङ्मन्युसमीरितेन महता तज्जिष्णुना किं पुन-
र्दिव्यास्त्रैरुपशोभितेन च नवैर्मन्त्रोपदिष्टेन च ॥ ७३ ॥

मन्त्री चास्ति सुहृत्तथाऽखिलजगद्गोप्ताऽस्य गोप्ता स्वयं
बाहुभ्यां शशिशेखरेण सदयं स्पृष्ट्वा समालिङ्गितः ।
शक्रार्धासनमप्यसौ परिलसन्नध्यास्त पार्थो मुदा
तद्दैवबलान्वितस्य विजयो हस्तागतः सर्वदा ॥ ७४ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
अष्टमः सर्गः ॥

## नवमः सर्गः

अस्मिन्लोके स्वजनविरहः केन सह्यः कथं वा
ज्ञातव्यैवा पुनरपि पुमान्स्नेहशक्त्या कथंचित् ।
आयात्येव स्वजनमचिरात्कान्तशक्त्या यथाऽयः
स्नेहग्रन्थ्या सुहृदमखिलं सन्निबद्धं हि लोके ॥ १ ॥

कान्तारे तत् प्रियविरहिता काम्यकारण्ये चतुर्भि-
र्धर्मार्थैः सा यदपि सहिता तं पतिं चिन्तयन्ती ।
इन्दोर्बिम्बं निशि कुमुदिनीवार्जुनं द्रष्टुकामा
पाञ्चाली ताः कथमपि समाः पञ्चपत्नी व्यनैषीत् ॥ २

ऊर्ध्वं दृष्ट्वा किमपि किमपि द्रौपदी सा वदन्ती
दीर्घैः श्वासैः किमपि किमपि स्वात्मनैवाचरन्ती ।
मुञ्चन्त्येषा नयनसलिलं सन्ततं म्लानवक्त्रा
मुक्ताहारा स्वयमचकथद्भीममित्थं कदाचित् ॥ ३ ॥

नाहं तस्माद्विरहमधुना नाथ शक्नोमि सोढुं
योऽसौ तस्यांपरिषदि तथा वीरशुल्कामवाप्नोत् ।
बाहुद्वंद्वो यदपि गुणवान् सोदरस्ते गरीया-
न्निःसन्देहं दशशतकरादर्जुनादर्जुनोऽयम् ॥ ४ ॥

क्रीडन्तं मे मनसि सततं फाल्गुनं सुन्दराङ्गं
कस्मिन्काले कथय पुरतो वीरमाजानुबाहुम् ।
पश्येयं तं स्मितमुखमहं मध्यमं पाण्डवानां-
मस्माकं च श्रयति विजयो भावि यस्यैव बाहुम् ॥ ५

महाश्चर्यं कुसुमितवनं रम्यसानुप्रदेशं
कान्तारं मे रचयति कथं चक्षुषोः प्रीतिमेतत् ।
कान्ते तस्मिन्प्रियतम तथा दूरदेशं प्रयाते
चन्द्राभावे निशि कुमुदिनी पुष्यति स्वप्रभां किम् ॥ ६ ॥

अन्विष्यन्ती विरहविधुरा रोहिणी चन्द्रबिम्बं
चूतं तन्वी स्वयमपि लता मार्गयन्ती समन्तात् ।
आक्रन्दन्ती निशि सकरुणं चक्रवाकी वियोगा-
त्काशन्तेऽस्मिन्जगति सविधे स्वात्मतेजःप्रदातुः ॥ ७ ॥

श्रुत्वा भीमः सकरुणमिदं द्रौपदीं सान्त्वयन्सन्
आचष्टेत्थं स विजयपरां चित्तवृत्तिं स्वकीयाम् ।
शोकः सद्यो भवति यदि वा सुष्ठु वाग्भिर्विभक्तः
कूलं भिन्द्यान्न किल विकृतोऽनेककुल्याभिरोघः ॥ ८ ॥

आयुष्मन्तं जगति विजयं दुर्जयं शक्रसूनुं
जानासि त्वं पुरुषवृषभं दीर्घबाहुं बलिष्ठम् ।
आरक्ताक्षं निजरिपुवनेऽतुल्यदावाग्निमाजौ
जेतारं तं वसुमतिभृतां विद्धि कृष्णस्य मित्रम् ॥ ९ ॥

शक्तौ पीनौ किल परिघतुल्यौ समौ दीर्घबाहू
वर्तेते तौ बहुविधमहाशस्त्रसंधानदक्षौ ।
सर्वेऽस्माभिर्बहुरणमुखे निर्जिताः शत्रवस्ता-
वाश्रित्यैव द्रुपदतनये भ्रातुरस्यैव मन्ये ॥ १० ॥

यस्यामिलैरपि विजयदौ पञ्चसंख्याङ्गुलौ ता-
वुल्लेख्येते दधतकरौ पञ्चशीर्षाविवाहो ।
भूरप्यस्मादिह विरहिता दृश्यते दुःखितेव
प्रावृट्काले भृशमुडुपतेः रात्रिरेवं वियुक्ता ॥ ११ ॥

स्मारं स्मारं तमिह नकुलो व्याकुलः साश्रुकण्ठः
पश्यन्भ्रातॄन्सकरुणमिमां द्रौपदीं वाचमूचे ।
कान्तेऽदृष्ट्वा कथमिह धृतिं तं विनाहं लभेय
ध्वान्तच्छन्नं भवति भुवनं तत्सुधांशोरभावात् ॥ १२ ॥

संस्तूयन्ते दिशि दिशि सदा सर्वमान्यै र्महद्भि-
र्गीयन्ते चामरयुवतिभिर्दिव्यकर्माणि जिष्णोः ।
नाहं जानेऽर्जुनमणिरसौ स्वप्रकाशं प्रदातुं
कान्तारस्थस्वजनमधुना कुत्र विस्मृत्य यातः ॥ १३ ॥

जित्वा जिष्णुर्युधि शितशरैस्तांश्च गन्धर्वमुख्यान्
लेभे तेभ्यो बहुशतहयान्बाहुवीर्येण वीरः ।
आनीयेत्थं बहुधनमसौ वीरसिंहः परेभ्यो
राज्ञे प्रादादतिविनयवान् राजसूयाख्ययज्ञे ॥ १४ ॥

आकर्ण्याऽऽर्द्रं स वचनमिदं पञ्चमः पाण्डुपुत्रः
सद्यः कण्ठादपि हृदयतः स्पन्दिनीं प्राह वाचम् ।
आःपापिन्किं निजजनवधं कर्तुमेवेच्छसि त्वं
जानन्नस्मानपि शलभ इवासि दुर्योधनान्ध ॥ १५ ॥

स ज्याघोषो विजयधनुषः श्रूयतेऽद्यापि नूनं
यः कर्णस्य ध्रुवमतिदृढं तर्जयत्येव कर्णौ ।
अज्ञातवासं कथयत कथं काम्यके कामयेय
ज्येष्ठं भीमादवरजमहं भीमचापं विनाहम् ॥ १६ ॥

यो वै धीमान्निमलयशसा सन्ततं राजमान-
स्तत्रैकाकी युधि विजितवान् यादवांस्तान्समेतान् ।
तां चाहार्षीत्सपदि विजयः कृष्णामितः सुभद्रां
तेजःपुञ्जं हृदयमधुना गाहते भ्रातरं तम् ॥ १७ ॥

पार्थो मध्ये हरिरिव चकास्त्येष मूर्तित्रयाणां
दिव्योद्याने किल विटपिनां मध्यवर्तीव बर्ही ।
सिंहस्त्वाजाविव च विलसत्येव मत्तेभमध्ये
स्मृत्वा स्मृत्वा कथमिह जनं तादृशं शर्म लभ्यम् ॥ १८ ॥

वीचिक्षोभात्प्रसभमुदधेः क्षिप्तमीनस्य दैन्यं
दूराचीरे तपति तपने धर्मपुत्रो दधानः ।
इत्थंभूतैः स्वजनवचनैर्वीचिभिस्ताड्यमान-
स्तूष्णीं तस्थौ वनभुवमसौ वीक्षमाणो मुहूर्तम् ॥ १९ ॥

वीणामाधादतिशुभफलं नारदो नादयन्सन्
गानालापाद्दुरितमपहरन् सज्जनानामकस्मात् ।
धुन्वन्दोषामरुण इव तां कूजनैः कुक्कुटानां
प्राच्यां दृष्टः प्रचुरकिरणैः सूचयन् सुप्रभातम् ॥ २० ॥

वेदान् सर्वान्स्वयमिव सर्वां नित्यशुद्धां श्रयन्तीं
सावित्रीं तां सततमपि तान् दिव्यमार्गैः प्रियेण ।
शुश्रूषन्तीं वनभुवि सदा वल्लभान् याज्ञसेनीं
पार्थानग्रे मुनिवर इमान्दृष्टवानाश्रयन्तीम् ॥ २१ ॥

शृङ्गैरुच्चैर्बहुगुणयुतैर्हेमशैलं चतुर्भिः
कृष्टा मेरुं चरति परितः सर्वदाऽर्कप्रभेव ।
पाञ्चालीं तां प्रियसहचरानाश्रयन्तीं स पश्यन्
वक्तुं तेषां प्रियमुपययावन्तिकं विश्वबन्धुः ॥ २२ ॥

संप्रेक्ष्याग्रे भुवि तु गगनादागतं धर्मपुत्रो
भक्त्या प्रीत्या च मुनिमतिदिव्यार्चिषा दीप्यमानम् ।
धावन् वेगात्सविनयमसौ नारदं नादरूपं
पत्न्या तं प्रत्युदगमदथप्रीतिवाक्यैरुपेत्य ॥ २३ ॥

आयान्तं तं विनयचरितैः शान्तमग्रे ज्वलन्तं
पश्यन् भीमादिभिरनुगतं धर्मपुत्रं महान्तम् ।
साध्व्या सार्धं वमिव ललिताधिष्ठितं मेरुशैलं
प्रीत्याऽचख्यौ किल सकुशलं प्रीतिवाक्यं मुनीन्द्रः ॥२४॥

सन्तुष्टोऽहं तव सुचरितैरीदृशैः श्लाघनीयै-
र्हे धर्मात्मन्नहमिह ददानि प्रियं ब्रूहि किं ते ।
अर्थिभ्यो हि प्रियमुपहरेद्बुद्धिमानर्थयुक्ता-
मादत्ते किं निमलसलिलं वर्जयित्वा जलार्थी ॥ २५ ॥

आकर्ण्यैवामनुपदमसौ नारदस्यार्थगर्भां
वाचं शुद्धां विमलहृदयादागतां युक्तियुक्ताम् ।
धर्मिष्ठोऽपि प्रियमकथयत्तं महर्षिं महात्मा
स्तोकं शोकात्क्षणमिव शनैर्नित्यमुक्तं विमुक्तः ॥ २६ ॥

जाने ब्रह्मन् जगति चरितैर्धर्मसंस्थापनार्थं
त्वातुं साधूनपि च भवतः सर्वयत्ना भवन्ति ।
ज्ञानिन्त्वागमनमपि ते भाग्यहीनानिमान्नः
सर्वान् त्रातुं विजयविरहाद्दुःखितान् वीक्षितुं च ॥

इच्छत्यस्मानिह यदि भवानद्य चानुग्रहीतुं
पुण्यात्मन् मे परिहर मुने त्वर्हिं सन्देहमेतम् ।
मर्त्यो यद्भूभ्रमणकरणाद्विन्दते तत्फलं किं
तीर्थस्नानादपि च लभते ब्रूहि किं तत्फलं च ॥ २८ ॥

एतच्छ्रुत्वा स तु मुनिरदादुत्तरं दीर्घदर्शी
कात्स्न्येनेत्थं प्रमुदितमना धर्मपुत्राय तस्मै ।
भीष्मेणोपश्रुतमपि यथा यत्पुलस्त्यान्महात्मन्
व्याचक्षे त्वामवहितहृदा तत्तथाऽऽकर्णय त्वम् ॥ २९ ॥

सिद्धैः स्नातेष्वमरगणसंपूतपुण्योदकेषु
स्नातः शुद्धः सकृदपि पुमानत्र यो भारतेषु ।
तेजस्वी सन् लसति भुवने दग्धपापोऽतिशुद्धो
नाहंकारो भवति न वशे चेन्द्रियाणां स याति ॥ ३० ॥

द्रव्यैर्वित्तैर्विहितविधिना चातिसंविस्तरास्ते
संप्राप्यन्ते जगति धनिकैः पार्थिवैरेव यज्ञाः ।
यज्ञाः शक्याः किमवनितले प्राप्तुमेते दरिद्रैः
प्राप्तुं तेषामपि विधिरिहास्ति क्रतूनां फलं यत् ॥ ३१ ॥

यज्ञेभ्यो या द्विगुणफलदा श्लाघनीया विशिष्टा
यां तु प्राहुः परमनिपुणाश्चातिगुह्यं मुनीनाम् ।
मर्त्यैः सर्वैरपि बहुधनं या विना सुष्ठु साध्या
जानीहीतामतिशुभकरीं तीर्थयात्रेति साधो ॥ ३२ ॥

यत्त्रैलोक्यश्रुतमतिमहद्देवदेवस्य तीर्थं
लोकाः प्राहुर्दिवि भुवि च तत्पुष्करं नाम दिव्यम् ।
तीर्थान्यस्मिन्बहुशतगुणं कोटिकोटि त्रिसंध्यं
सन्धीयन्ते शिवकरुणया सज्जनानां विभूत्यै ॥ ३३ ॥

यो यत्तीर्थे समभिलषति स्नातुमत्रैव मर्त्यः
पूतो भूत्वा भुवि स विलसन्मान्यते सर्वमान्यैः ।
आप्लुत्यैवेदिह स तु पुमान्पुष्करे दिव्यतीर्थे
सम्पूतः सन् दिवि भुवि सदा पूज्यते पूज्यलोकैः ॥ ३४ ॥

अस्मिन् स्नात्वा ऋषिसुरपितॄन् पुष्करे तर्पयित्वा
भूदेवेभ्यो बहुरुचिकरं यो ददात्यत्र भोज्यम् ।
एतस्य स्याद्रिपुरपि सुहृत्सोऽपि भूत्वाऽर्कतुल्यो
नित्यं स्तुत्यो दशगुणफलं विन्दते चाश्वमेधात् ॥ ३५ ॥

सायं प्रातर्नियतमनसा पुष्करं दिव्यतीर्थं
भक्त्या युक्तः स्मरति यदि यः प्राञ्जलिः स्नानकाले ।
सोपि स्नातो भवति नियतं सर्वतीर्थेषु मर्त्यो
नित्यं शुद्धो सदसि महतां श्लाघ्यते सत्यमेतत् ॥ ३६ ॥

धर्मारण्यं तदनु मनुजस्तीर्थयात्राभिलाषी
श्रीजुष्टं तद्विविधयमिनां शिष्टयज्ञैर्विशिष्टम् ।
यत्सौभाग्याद्धरति निखिलं स्पृष्टमात्रेण पापं
गच्छेन्मर्त्यः प्रमुदितमनाः पुण्यकण्वाश्रमं तत् ॥ ३७ ॥

तीर्थादस्माद्व्रजतु पतनं तद्ययाति प्रशस्तं
वर्तेतासौ यदि नियतचित्तस्तु यत्नोपवासम् ।
तर्हि प्राप्नोत्यमितफलमप्यश्वमेधस्य धन्यो
दिव्यं लोकं भजति पतनादत्र देहस्य देही ॥ ३८ ॥

तस्माद्धर्मी स तु पुरहराधिष्ठितं पुण्यतीर्थं
गच्छेद्धीमान्भुवि परिलसत्तन्महाकालनाम्ना ।
ऐश्वर्याप्त्या लसति लभते निर्भयत्वं प्रियं च
स्नात्वा तस्मिन्भवमुपवसन्कालकालं विनीतः ॥ ३९ ॥

संप्राप्यास्मान्नियतमनसा स्थाणुतीर्थं प्रसन्नं
ख्यातं नाम्नेतिविमलजलं भद्रपूर्वं वटं तत्
यत्रैवोमापतिमुपवसन्निष्टकाम्यार्थमीप्सुः
शम्भोः सत्यं गणपतिपदं स प्रसादादुपैति ॥ ४० ॥

चन्द्यां सर्वैस्त्रिभुवनजनैस्तां नदीं नर्मदाख्यां
यः स्नात्यस्या महति सलिले चिन्तयंस्तं महेशम् ।
अन्तः शुद्धः स भवति शशश्चन्द्रतुल्योऽपि भूत्वा
सन्तुष्टःस्याद् सहृदयजनैः सर्वथा सर्वकालम् ॥ ४१ ॥

गन्तव्या या प्रवहति सदा रन्तिदेवस्य कीर्तिं
शंसन्तीव क्रतुमपि तथा रक्तचर्मण्वती सा ।
अग्निष्टोमक्रतुफलमसौ देवराजप्रसादा-
ल्लब्ध्वा यास्यत्यमरवसतिं दिव्ययानेन मर्त्यः ॥ ४२ ॥

स्नात्वा तीर्थे हुतवहसमाधिष्ठिते यः प्रभासे
तेजस्वी सन्हुतवहनिभः स प्रभासेन नित्यम् ।
तस्मात्तीर्थं व्रजतु मनुजो दानपूर्वं वरं तद्
यत्रादित्या विविधवरदाः सन्ति तुष्टाः प्रदानैः ॥ ४३ ॥

आप्लुष्टो यद्युषसि मनुजो द्वारवत्यां च सायं
प्राप्नोत्येव प्रचुरकनकं तर्हि पिण्डारकेऽस्मिन् ।
यः स्नात्यस्मिन् स किल जलधौ सिन्धुनद्यातिसक्ते
दिव्यस्थाने लसति शशिनश्चापि मुष्णाति कान्तिम् ॥ ४४

पुण्यस्नानैरिह तु लभते यत्र पञ्चापगानां
संयोगोऽस्ति प्रियशुभफलं सोऽपि पञ्चक्रतूनाम् ।
स्नानैः शुद्धस्तदनु विमलं तीर्थमासाद्य धन्यो
दिव्यं पुण्यं विमलहृदयो वासवं लोकमेति ॥ ४५ ॥

पुण्यं तीर्थं व्रजतु मनुजो पूजयन्ति स्म यत्र
    श्रीनाथं तं स्फटिकचरुभिः सप्त सप्तर्षिवर्याः ।
तत्राप्लुत्य स्फटिकविशदं देविकाख्यं तु गत्वा
    सन्तं पुत्रं समुपलभते तत्र देवीमुपास्य ॥ ४६ ॥

गत्वा धीमान् शुभहृदयवान् रुद्रकोट्यां पवित्र्यां
    स्नात्वा भक्त्या महति सुजनो दीर्घसत्रे च तीर्थे ।
तीर्थानीत्थं प्रतिपदमसौ भाग्यदायीनि तीर्त्वा
    शुद्धान्तः सन् प्रविशति कुरुक्षेत्रमत्यन्तशुद्धम् ॥ ४७ ॥

ध्यायन् कृष्णं परमपुरुषं यस्त्यजत्यत्र गात्रं
    एतत्क्षेत्रं परमपदवीं तं नयत्येव धन्यम् ।
तीर्थं गत्वा विमलमनसा श्रेष्ठसारस्वताख्यं
    गच्छेत्तस्मादपि शुभतरं विश्रुतं तत्पृथूदम् ॥ ४८ ॥

तत्तीर्थानामपि शुभतमं विद्धि तीर्थं पवित्रं
    सर्वान् पापान् हरति तरसा तद्धि तस्मिन्प्रविष्टे ।
शाकंभर्याः स तु करुणया याति धान्यैः समृद्धिं
    मर्त्यस्तस्मादपि वनभुवा याति शाकंभरीं यः ॥ ४९ ॥

तत्र स्नात्वा कनखलमुपस्पृश्य गच्छेदुदीच्यां
    संकेते तद्भुवनविदिते वाहिनीनां तिसृणाम् ।
विख्यातायां विमलसलिले स्नाति योऽत्र त्रिवेण्याः
    स्वर्गार्हः सन् फलमिहदशाश्वक्रतूनां लभेत ॥ ५० ॥

ब्रह्मावर्तं तदनु स महद्ब्रह्मचारी समेत्य
स्नातस्तीर्थे प्रमुदितमनाः सुन्दरीति प्रसिद्धे ।
शुद्धान्तः सन् स्वयमुपवसन्नम्बिकां भक्तियुक्तः
कामस्येवाऽप्युपलभते कामिनीकाम्यरूपम् ॥ ५१ ॥

अस्माद्गच्छेद्भुवि परिलसन्नैमिषारण्यदेशं
ब्रह्मा दिदृक्षुर्निवसति सुरैर्यत्र सिद्धोपदेशम् ।
तीर्थान्यस्यां किल परिणतान्यासते यानि भूम्यां
तान्यस्मिन्नप्यतिशुभतले नैमिषारण्ये भवन्ति ॥ ५२ ॥

साधुस्तस्मादुपसरति तद्दोप्रतारं सरय्वाः
यत्संसाराज्जननमरणात्तारयत्येव भक्तान् ।
स्नात्वा तस्माद्व्रजति मनुजस्तूर्वरंस्तारकं तत्
संद्रष्टुं तं भवभयहरं दिव्यकाशीपुरीं ताम् ॥ ५३ ॥

ध्यात्वा देवं नयति दिवसान्विश्वनाथं महेशं
देशेऽस्मिन्यो जपति च मुहुस्तारकं राममन्त्रम् ।
नूनं शम्भोः परमकृपया ब्रह्महत्यां निहत्य
निर्मुक्तः स्यात्स च किल विहायेह देहं मुमुक्षुः ॥ ५४ ॥

गङ्गा यत्र क्षिति यमुनया संगता तत्प्रयागं
मध्यं सन्तस्तदिह जघनस्थानमाहुः पृथिव्याः ।
यः पूजाद्यैस्तमसकृदुमावल्लभं तोषयित्वा
मूलस्थाने तरति च भवं नाशयित्वात्मशत्रून् ॥ ५५ ॥

सीतारामं सहृदयगुहस्तारयामास गङ्गां
रामोऽप्येनं त्रिविधपथगां तारयामास मायाम् ।
इत्थं ताभ्यामिदमतितरां पावितं शृङ्गवेरं
शान्तिं दत्ते सुखमपि यशः स्पर्शनात्सज्जनेभ्यः ॥ ५६ ॥

गत्वा रूपातां दिवि भुवि गयां यो ददात्यत्र सीमा-
नक्षय्याख्ये वटतरुतले यत्प्रियं तत्पितृभ्यः ।
प्राप्नोत्येवाक्षयपदमसावक्षयां चापि लक्ष्मीं
यद्येकोपि व्रजति तनयोऽत्राक्षयं तत्कुलं स्यात् ॥ ५७ ॥

धर्मप्रस्थं तदनु समुपस्पृश्य तस्माच्च गत्वा
ब्रह्मर्षेः सः प्रविशतु जनो गौतमस्याश्रमं च ।
रामस्पृष्टे विमलसलिले स्नात्यहल्याह्रदे यो
मेघादिन्दुः शरदि तु यथा मुच्यते सोऽपि पापात् ॥ ५८

स्मारं स्मारं परमसुखदां दिव्यधारां पुमान्यो
माहेश्वर्यां विमलसलिले स्नाति तस्यां विवेकी ।
सत्यं सौभाग्यमवनितले विन्दते चापि कीर्तिं
जन्मान्तेऽसौ ध्रुवमपि पदं लप्स्यते दिव्यलोके ॥ ५९ ॥

गत्वा माहेश्वरपुरमसावर्चयित्वा महेशं
मर्त्योऽप्यस्मात्सपदि लभते तस्य जातिस्मरत्वम् ।
शालग्रामं परमपुरुषं चिन्तयित्वा रमेशं
लब्धुं तीर्थे स परमपदं स्नाति नारायणाख्ये ॥ ६० ॥

विश्वामित्रस्त्वलभत परां कौशिको यत्र सिद्धिं
स्नानैर्मर्त्यो लसति यशसा तद्ध्रदे कौशिकाख्ये ।
तस्माद्गच्छेदथ विदितसन्ध्यामुपासीत साधुः
सम्भूता या किल रघुपतिस्पर्शनात्पुण्यतीर्थम् ॥ ६१ ॥

स्नानैः स्पृष्टो जलनिधिजलं यत्र गङ्गा श्रयन्ती
संशुद्धः सन् दशगुणफलं चाश्वमेधस्य गच्छेत् ।
तस्माद्गत्वा विमलमनसा स्नात्यसौ नर्मदायां
यत्र स्नानैर्भवति मनुजो सर्वपापैर्विमुक्तः ॥ ६२ ॥

पश्चाच्छ्रीपर्वतमुपसरेत्पार्वतीशं दयालुं
प्रीत्या भक्त्या परमसुखदं पूजयित्वाऽतिपूज्यम् ।
निर्धूताघः खलु भवति किं चाधिगच्छत्यतुल्यां
सिद्धिं धीमान्परमपदवीं विन्दते कीर्तियुक्तः ॥ ६३ ॥

राजन् गच्छेदथ विदितगोदावरीं वारिधारां
सालङ्कारां पयसि सरसं सारसैः सेव्यमानाम् ।
अत्र स्नानैः सुलघु लभते गां च वित्तं प्रभूतं
गात्रत्यागे च नियतमसौ वासुकेर्लोकमेति ॥ ६४ ॥

अग्निष्टोमक्रतुफलमसौ चापि जातिस्मरत्वं
स्नात्वाऽऽप्नोति ह्रद इह जनो यस्तु जातिस्मराख्ये ।
इष्ट्वा शक्रस्त्विह हरमुपास्य क्रतूनां शतं सः
प्राप्नोदन्यः सुरगणपतित्वं च शच्याः पतित्वम् ॥ ६५ ॥

प्रस्थायास्मात्तु वनपथैर्दाक्षिणात्यामुपेत्य
श्रेष्ठां कृष्णामथ मधुरवर्णद्वयं कृष्णशब्दम् ।
जप्त्वा जप्त्वा विहितविधिना स्नानमस्यां तु नद्यां
कृत्वा भूमौ परमकृपया भाति कृष्णस्य नित्यम् ॥ ६६ ॥

शिष्टैर्दिव्यैः श्रितमुपसरेद्दण्डकारण्यभूम्यां
भक्त्या भद्रायतनशरभङ्गाश्रमं भद्रमाप्तुम् ।
चारं चारं वनभुवि जनो दृङ्क्ते ब्रह्मचारी
पापैर्मुक्तः प्रविशति पुरा ब्रह्मलोकं किलान्ते ॥ ६७ ॥

नष्टेष्वस्मात्किल नरपते सर्ववेदेषु लोका-
दोंकारेणोदचरदिह तु श्रद्धया चाङ्गिराः सः ।
तज्जिह्वायामखिलमुपतस्थे तदा वेदजातं
तस्माद्वेदानपठदखिलान्सुष्ठु सारस्वतोऽत्र ॥ ६८ ॥

काम्यं काम्याधिकमपि फलं भाग्यवन्तो लभन्ते
काञ्चीं गत्वा कनकमणिभिः प्रोज्ज्वलाङ्गीमुपास्य ।
कारुण्याब्धौ विहरति सुखं कालकालस्य धन्यः
कामाक्षीं च स्मररिपुमुपेत्येह काञ्चीपुरीशम् ॥ ६९ ॥

कावेर्याख्या मधुरपयसा जम्बुकेशाम्बुलिङ्गं
नित्यं रुद्रं स्फटिकविशदेनाभिषिञ्चत्यपगा सा ।
प्रक्षाल्यैव प्रवहति मुदा रङ्गनाथस्य पादौ
माङ्गल्यार्थं भुवमिह सतां पापहन्त्री पवित्री ॥७० ॥

लोपामुद्रां विदितयशसं कुम्भजन्मप्रियां तां
काचेरीमेत्य कविभिरुपश्लोकितां पुण्यभाजः ।
पायं पायं सलिलममृतं पाविता्स्ते महान्तः
स्नात्वा स्नात्वा परमपदमन्ते च सन्तो लभन्ते ॥ ७१ ॥

द्रष्टुं दण्डायुधधरमुमापुत्रमुद्दण्डवीरं
स्मारं स्मारं व्रजतु फलनीशैलमैश्वर्यभूमिम् ।
सन्तर्प्यैनं मधुफलरसैश्चाभिषेकैर्विशाखं
धन्यः श्रीमान् भवति च सदा भाग्यलक्ष्मीमुपास्य ॥७२

काव्यैः काव्याभिरपि मधुरां वस्तुभिः काम्यजातै-
स्तां विख्यातां प्रथितमधुरां नित्यकान्ति पुरीं सः ।
नित्यं स्तुत्यां सहृदयकवेर्नीलकण्ठस्य पद्यै-
र्मीनाक्षीमीक्षितुमुपसरेत्पाण्ड्यपुर्लीं विभूत्यै ॥ ७३ ॥

तस्मादासेवितुमुपसरेत्स्वामिशैलं विशुद्धः
सुब्रह्मण्यं शरवणभवं सद्गुरुं कार्तिकेयम् ।
यस्मिन्देशे हरिहरविरिञ्च्यादिदेवास्त्वमुष्मात्
बालस्कन्दात्प्रणवमयमोंकारतत्त्वं व्यजानन् ॥ ७४ ॥

तस्मात्साधुर्व्रजति विदितां वाहिनीं ताम्रपर्णीं
यस्यास्तोये किल विविधवर्णाम्बुसत्त्वाश्चरन्ति ।
आसेवन्ते नियतमनसा पापनाशेश्वरं ये
तेषां पापं हरति स भवं तारयत्यात्मशुद्धान् ॥ ७५ ॥

गत्वा रामेश्वरमथ धनुष्कोटिमासाद्य साधुः
सान्द्रं यत्र त्रिपुरहरमानर्च पौलस्त्यहन्ता ।
शुद्धः स्नानैः शशिधरमुमावल्लभं रामनाथं
सम्पूज्यैनं भवति सहसा ब्रह्महत्याविमुक्तः ॥ ७६ ॥

वल्लीं मल्लीकुसुमसुकुमारां प्रमुष्णन् कुमारो
वल्लीपुर्यां शशिधरसुतः स्तेनवल्लीलया ताम् ।
यः क्षेमार्थं लभति परिणीयोज्वलाङ्गीमजस्रं
शर्मार्थी तं व्रजतु शरणं सज्जनानां शरण्यम् ॥ ७७ ॥

कन्यारूपं कनकनिभमास्थाय यत्रैव भक्तान्
त्रिष्टत्यार्तान् विमलहृदयान् रक्षितुं लोकमाता ।
गच्छेद्भक्तस्त्विह किल पुरा सेविता या कुमारी
भक्त्या स्तुत्या भुवनजननी कोटिकन्याभिरम्बा ॥ ७८ ॥

तीर्थानां कोटिमवनितले स्थापयित्वात्र कन्या
पारावारैस्त्रिभिरपि समं वीज्यमानास्ति नित्या ।
आरक्ताक्षः समभुपचरत्यर्कदेवोऽपि देवीं
सन्ध्याकाले सरति परितः सज्जनानां समूहे ॥ ७९ ॥

नानारत्नोपखचितकिरीटं लसत्काकपक्षं
राजीवास्यं रचितमणिभिर्मण्डिताङ्गानि माता ।
लीलापाङ्गं नयनयुगलं चम्पकोल्लासिगात्रं
धत्ते पादावखिलजननी सज्जनानां विभूत्यै ॥ ८० ॥

धन्यक्षेत्रैर्विततमतुलं नित्यधन्यैश्च रम्यं
दिव्यक्षेत्रं प्रविशतु ततः क्षेममिच्छन् मनुष्यः ।
वल्लीदेवीपतिमुपवसेदेवसेनासमेतं
कल्याणानां नियतवसतिं नीलकण्ठप्रियं तम् ॥ ८१ ॥

आसाद्यास्माद्विमलमनसाऽनन्तपूर्वं पुरं त-
द्यस्मिन्देशे कमलनयनः पद्मनाभः शरण्यः ।
सर्वान्भक्तानवितुमवनिं चाधिशेते स शेषं
धन्यः श्रीमान्पुनरपि पुमान्विन्दते नष्टशक्तिम् ॥ ८२ ॥

पम्पातीर्थे परमसुखदं काशते कोलेषु
यस्मिन्देशेऽवतरति पुरा पन्तलाधीशभूम्याम् ।
प्रीतः शास्ता "त्वमसि शरणं शम्भुपुत्रे" ति शब्दै-
र्मङ्गल्यार्थे शबरिगिरिपीठोपकण्ठे महिष्ठः ॥ ८३ ॥

गच्छेत्तस्माच्च शबरिगिरिं शाश्वदैश्वर्यसिद्ध्यै
स्मारं स्मारं हरिहरसुतं तं मताथैर्विशुद्धः ।
स्नातं वा पीतमुदकलवं वात्र तीर्थे पवित्रे
मालिन्यं संहरति ममतामान्तरं चापि बाह्यम् ॥ ८४ ॥

द्रष्टुं गच्छेत्तदनु मनुजः श्रेष्ठपुर्यालयस्थं
प्रीत्याऽश्रन्तं प्रियमिव मुदा दिव्यहैयङ्गवीनम् ।
आप्नोत्येषः शुभमपि सुखं बालकृष्णप्रभावा-
दाप्लुष्टश्चेद् इह विमले कृष्णतीर्थे पवित्रे ॥ ८५ ॥

कालट्यारूयां व्रजतु मनुजः कल्मषघ्नीं पुरीं या
पूर्णानद्याः परिलसति कूले दुकूलेव शुभ्रा ।
अत्राद्वैताममरफलदां ब्रह्मविद्यां विधत्ते
पूर्णज्योत्स्नामिव शशिकला शारदा शारदाभा ॥ ८६ ॥

वातेनानीतमवनितले स्थापितं वातपुर्यां
तेजोराशिं पतितपुरुषोद्धारणार्थं पुराणम् ।
यः श्रीकान्तं भजति मनसाऽप्यत्र नारायणेति
श्रीमान्नित्यं भवति स भयाद्वातरोगाच्च मुक्तः ॥ ८७ ॥

गोकर्णे तं नियमितमनोमन्युरासाद्य पश्चात्
स्नात्वा मृत्युंजयमुपवसेज्जेतुकामस्तु मृत्युम् ।
वासं चक्रे सह सुरगणैश्चापि गन्धर्वसिद्धैः
शक्त्या युक्तः शिव इह पुरा राक्षसेन्द्रं परीक्ष्य ॥ ८८ ॥

किंचित्कालं निवसतु महीशूरपुर्यां महात्मन्
यत्रैवाम्बा दनुजमहिषं मारयित्वा मृडानी ।
कारुण्यार्द्रा भुवनमखिलं सिंहसंस्था ररक्ष
द्रष्टुं तं भृङ्गगिरिमथ गच्छेत्ततो भद्रमिच्छुः ॥ ८९ ॥

देवर्षिप्रोक्तमिदमनुसृत्योत्तमं सत्तम त्वं
शुद्धान्तः सन् गुरुजनपथा याहि माङ्गल्यसिद्ध्यै ।
तीर्थान्येतान्युपचर मुदा तीर्थयात्राभिलाषी
पुण्यं पुण्यैरिह भुवि बुधो वर्धयेदात्मशक्त्या ॥ ९० ॥

नित्यं प्रातः पठति य इदं मुच्यते सर्वपापै-
  र्नित्यानन्दश्चरति बहुमान्यश्च सर्वैः किलायम् ।
नित्यं भूयात्सुतधनयुतः कीर्तिमान्धान्ययुक्तो
  नित्यं संवेत्ति गुरुकृपया तच्च सत्यस्वरूपम् ॥ ९१ ॥

एष्यत्यत्रानघ स तु मुनिर्लोमशो नाम मान्यो-
  भक्त्या युक्तस्त्वमपि विधिवत्पूजयित्वा विधिज्ञम् ।
पाश्चात्याऽनुव्रज भुवि तव भ्रातृभिस्तं मुनीन्द्रं
  भद्रं कीर्तिं त्वमसि लभसे शत्रुहीनं च राज्यम् ॥ ९२ ॥

उक्त्वा नारदपुङ्गवस्त्ववितथं वाक्यं च तच्छ्रीकरं
  धर्मात्माथ तिरोदधे स सहसा धर्मात्मजं सान्त्वयन् ।
देवर्षिं किल लोमशं च विपिने तस्थुस्तथा पाण्डवाः
  शर्मार्थं पथि संप्रतीक्ष्य मनुजो नक्तं प्रदीपं यथा ॥ ९३ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
नवमः सर्गः ॥

## दशमः सर्गः

आययौ शुभमाख्यातुमर्जुनभ्रातुरन्तिकम् ।
पुरुहूतस्य निर्देशात्पुण्यश्लोकस्य लोमशः ॥ १ ॥

इन्द्रदिश्यर्कतुल्याममिन्द्रलोकात्समागतम् ।
पाण्डवाननपद्मानि पश्यन्ति स्म पुरोहितम् ॥ २ ॥

पार्थाः प्रतीक्षमाणास्तं प्रत्युद्गम्य सपर्यया ।
पूजयामासुरार्यास्ते पूतात्मानं यथाविधि ॥ ३ ॥

सानुजं धर्मपुत्रं तं सानुक्रोशस्तु लोमशः ।
संवाहयन्मुनिश्रेष्ठः सार्थवाचमुवाच सः ॥ ४ ॥

कुशलः कर्मसु स्वर्गे कुशली ते धनंजयः ।
भ्रातॄणां शर्म जिज्ञासुर्वर्तते वासवान्तिके ॥ ५ ॥

जवेन नीयमानोऽपि पश्चाद्गन्तुं समीहते ।
न किं ध्वजपटो राजन्वातेन तरलीकृतः ॥ ६ ॥

एवं नीतोऽपि दैवेन वसन्नपि सुरालये ।
स्वजनांश्चिन्तयन्नेव मनस्तस्यास्ति भूतले ॥ ७ ॥

नन्दिग्रामे यथा साधुर्भरतो भ्रातरं स्मरन् ।
भ्रातृस्नेहवशात्तत्र भ्राता ते वर्तते तथा ॥ ८ ॥

करिष्यन्देवसाहाय्यं स वसेत्कालचोदितः ।
पार्थः स्वर्गतले श्रीमान्पाकशासनशासनात् ॥ ९ ॥

पार्थस्य धीरकृत्यानि सर्वेऽपि दिवि वासिनः।
आश्चर्येण समाकर्ण्य प्रशंसन्ति पुनः पुनः ॥ १० ॥

लेभे पाशुपतास्त्रं च संस्पृष्टः शम्भुना परम्।
प्रतोष्य तपसा धीमान्पुरारिं स परंतपः ॥ ११

आशापतिसकाशादप्यनुग्रहपुरःसरम्।
अलप्सिष्ट महाशस्त्राण्यमोघानि धनंजयः ॥ १२ ॥

समाकृष्टावतिस्नेहात्मृत्युंजयधनंजयौ।
परस्परं समाश्लिष्टावन्योन्यमवबोधितौ ॥ १३ ॥

स्वर्गे नीतः स शक्रेण समाश्लिष्टः पुनः पुनः।
भ्रातॄन्विना मनःशान्तिं स्वर्गेऽपि कथमाप्नुयात् ॥ १४ ॥

भ्रातॄंश्चिन्तयतस्तस्य द्रौपदीं च पतिव्रताम्।
कथं कथय रोचेत स्वर्गसौख्यं महात्मने ॥ १५ ॥

प्रतिषिद्धाऽप्सराः सापि पार्थेनैव तथोर्वशी।
धर्मव्रतेन धर्मात्मन् स्वयं रन्तुं समागता ॥ १६ ॥

अन्यच्च कारणं राजन्नस्त्येवागमने मम।
सावधानं शृणु श्रेष्ठ वाक्यमेतन्नरोत्तम ॥ १७ ॥

नेतुं च तीर्थयात्रायै तीर्थयात्राभिलाषिणः।
अहं वः शक्रनिर्देशादागतोऽस्मि तवान्तिकम् ॥ १८ ॥

तीर्थयात्रां विजानीहि सर्वपापप्रणाशिनीम्।
दायिनीं सर्वशक्तीनां सर्वसौभाग्यकारिणीम् ॥ १९ ॥

अमितानि ध्रुवं राजंस्तीर्थयात्राप्रकाशितु ।
तप्तायस्यम्बुबिन्दूनामवस्थामधियान्ति ते ॥ २० ॥

तीर्थयात्रा मनुष्याणां मनः प्रक्षाल्य सा ध्रुवम् ।
दर्शयत्यन्तरात्मानं दशान्ते दिव्यतेजसा ॥ २१ ॥

श्रुत्वा तस्य वचः सोऽपि दौपद्या भ्रातृभिः सह ।
मतिं व्यधत्त धर्मात्मा गमनाय च तत्क्षणम् ॥ २२ ॥

पार्थास्त्वनुमताः श्रेष्ठैः धौम्यनारदपर्वतैः ।
लोमशेन च यात्रायै ब्राह्मणैः सह संगताः ॥ २३ ॥

मार्गशीर्षमतीतायां पुष्येणालंकृते दिने ।
पुरोहितान्पुरस्कृत्य प्राङ्मुखाः प्रस्थितास्ततः ॥ २४ ॥

कन्यातीर्थे प्रयागं च गोमतीं च महौजसः ।
गत्वा क्रमेण ते प्रापुस्तत्रागस्त्याश्रमं महत् ॥ २५ ॥

पुरा मुनिरगस्त्योऽसावपिबत्सागरं क्रुधा ।
नहुषं चापि महातेजाः शप्तवान् कुम्भसंभवः ॥ २६ ॥

लोपामुद्राप्रसादार्थं वातापिं तु महासुरम् ।
हत्वा संपादयामास संपदं मुनिरिल्वलात् ॥ २७ ॥

ततः शम्भुजटाभ्रष्टां जाह्नवीं तां समागमन् ।
स्नात्वा तत्र महाभागास्तर्पयन्ति स्म ते पितॄन् ॥ २८ ॥

पूरणार्थं सागरस्य पृथिवीमवतारिता ।
यस्तु पीतस्त्वगस्त्येन दानवक्षयकारिणा ॥ २९ ॥

आप्लुष्टास्तु भृगोस्तीर्थे पाण्डवा मेनिरे क्षणम् ।
दुर्योधनहृतं तेजः पुनरायतमात्मसु ॥ ३० ॥

ते लोमपादजामातुस्तपोवनमथाविशन् ।
धीमन्तस्त्वङ्गदेशावग्रहनिग्राहकस्य तत् ॥ ३१ ॥

आश्रमं जामदग्नेस्तं प्राविशंस्तदनन्तरम् ।
हृतं यत्परशुपाणेस्तेजः कोदण्डपाणिना ॥ ३२ ॥

वेदीरूपा स्थिता या भूर्वेदीमापुश्च तामथ ।
वैतरणीमुपस्पृश्य कश्यपेन प्रसादिता ॥ ३३ ॥

शुद्धाः शूर्पारकं दृष्ट्वा प्रभासं ते समाययुः ।
अत्र कृष्णादिभिः पार्थाः सम्यगाश्वासिता गिरा ॥ ३४ ॥

तेषु तेषु च तीर्थेषु स्नात्वा ते शुद्धमानसाः ।
आययुः सिद्धिभूमिं तां च्यवनस्य महामुनेः ॥ ३५ ॥

हस्तौ तौ वज्रहस्तस्य मुनिः स्तंभितवान् पुरा ।
स सोमपीथिनौ चक्रे सुकन्याजानिरश्विनौ ॥ ३६ ॥

इन्द्रप्रस्रवणं रम्यं ददृशुः पाण्डवादयः ।
यत्रायजत पुत्रार्थे युवनाश्वो महीपतिः ॥ ३७ ॥

युवनाश्वस्य पार्श्वात्तु जातः पुत्रोऽभिधीयते ।
मां धास्यतीति मांधाता मघोनस्तु गिरा तदा ॥ ३८ ॥

विपाशा नाम यैः स्पृष्टा सरिच्छिष्टैस्त्वनन्तरम् ।
वसिष्ठोऽत्र विशोकोऽभूत्पुत्रशोकेन कर्शितः ॥ ३९ ॥

पाशेनात्मानमाबद्ध्य नद्यामस्यां पपात सः ।
विपाशाया विपाशः सन् उत्थितः सहसा मुनिः ॥ ४० ॥

काश्मीरमण्डलं दृष्ट्वा मानसद्वारमप्यमी ।
वितस्तामापगां पश्चादापुस्ते धर्मचारिणः ॥ ४१ ॥

अग्निः कपोतरूपेण श्येनरूपेण वासवः ।
धर्मबुद्धिं गतावत्र परीक्षितुमुशीनरम् ॥ ४२ ॥

ते साधवस्ततो जग्मुरष्टावक्रशुभापगाम् ।
बन्दिनं पितृजेतारं वादे यो जितवान्मुनिः ॥ ४३ ॥

अङ्गानां तु मुनेस्तस्य समीकरणहेतुना ।
सद्भिराहूयते लोके समङ्गा नाम सा सरित् ॥ ४४ ॥

दर्शनीयं तु संदृष्टं श्वेतकेतोस्तदालयम् ।
मानुषं रूपमास्थाय यत्र दृष्टा सरस्वती ॥ ४५ ॥

सन्तः संदृष्टवन्तस्ते लोमशप्रमुखास्ततः ।
भरद्वाजतनूजस्य यवक्रीतस्य तत्पदम् ॥ ४६ ॥

क्रुधा रैभ्यापराधेन मारितः क्रूररक्षसा ।
पुनरुज्जीवितः सोऽपि सन्तुष्टैरमरैरिह ॥ ४७ ॥

लोमशः पाण्डवैः सार्धं तीर्थान्येतानि दर्शयन् ।
कुलिन्देशसुबाहोस्तद्विषयं प्राप निर्ममः ॥ ४८ ॥

निक्षिप्यात्रेन्द्रसेनादीन्निर्मदो गन्धवाहनम् ।
सद्भिर्मितपरिवारैः गच्छन्नासीत्स पाण्डवैः ॥ ४९ ॥

यथा सा पदमप्येकं द्रौपदी गन्तुमक्षमा ।
शोचनीया तथा साऽभून्म्लानवक्त्रा वरानना ॥ ५० ॥

भर्तारस्तु महाशक्ताः राजपुत्री पतिव्रता ।
तथापि द्रौपदी साध्वी भृशमार्ता विधेर्बलात् ॥ ५१ ॥

अध्वश्रमपरिक्लिष्टामर्जुनासक्तमानसाम् ।
अभूवन्व्याकुलाः सर्वे दृष्ट्वा तां पाण्डवादयः ॥ ५२ ॥

दृष्ट्वा धर्मात्मजः साध्वीमध्वानं गन्तुमक्षमाम् ।
अनन्यचिन्तया कृष्णं चिन्तयामास रक्षकम् ॥ ५३ ॥

तदा सानुचरस्तत्र भीमपुत्रो घटोत्कचः ।
ननामाङ्घ्रिषु सर्वेषां तानुपेत्य यदृच्छया ॥ ५४ ॥

येन केनापि रूपेण भक्तानाश्रितवत्सलः ।
रक्षत्येवाचिरात्कृष्णो जनरक्षकरक्षकः ॥ ५५ ॥

धर्मपुत्रादयस्तस्मादुह्यमानाश्च तत्क्षणम् ।
घटोत्कचेन तेनैव नीता बदरिकां लघु ॥ ५६ ॥

समानीतेन गन्धेन गन्धवाहेन तत्र सा ।
पार्थचित्ता तु पाञ्चाली वशं सुमनसां गता ॥ ५७ ॥

आनेतुं तानि पुष्पाणि प्रययौ वायुनन्दनः ।
पूरयितुं तदा तस्याः प्रणयिन्या मनोरथम् ॥ ५८ ॥

गच्छन्दिशमुदीचीं तद्गन्धलक्ष्येण लक्षयन् ।
स वृद्धकपिना मार्गे सन्निरुद्धगतिरत्वभूत् ॥ ५९ ॥

वृद्धकोपेन भीमोऽपि दृष्ट्वा तं वृद्धवानरम् ।
अन्यत्रोत्क्षेपणायामुं तत्क्षणं स प्रवृत्तवान् ॥ ६० ॥

बहुयत्नेऽमशक्तोऽपि बहुधा स प्रयुक्तवान् ।
वृद्धेऽपि वानरे भीमः सर्वशक्तिमुपाहरन् ॥ ६१ ॥

यतमानोऽप्यशक्तोऽभूच्छत्तया चालयितुं यदा ।
अपृच्छत्तत्त्वमाख्यातुं भक्त्या नत्वाऽस्य तं तदा ॥ ६२ ॥

स्वां कथां कथयामास विश्वरूपं च मारुतिः ।
दर्शयामास भीमाय भीमाभ्यर्थनया तदा ॥ ६३ ॥

महारथस्य पार्थस्य समास्थाय रथध्वजम् ।
तस्मिन्भावि महायुद्धे साहाय्यं करवाणि वः ॥ ६४ ॥

इत्युक्त्वा मारुतिं भीमं मारुतिः स महाकपिः ।
अन्तर्दधे स्वयं तस्मात्समालिङ्ग्य पुनः पुनः ॥ ६५ ॥

स विवेश जलान्तस्तद्विश्वरूपमथ स्मरन् ।
नलिनानि प्रफुल्लानि नलिन्यामवलोकयन् ॥ ६६ ॥

तस्य रक्षीणि रक्षांसि संहर्तुमागतान्यमुम् ।
भीकरैरायुधैर्भीमं वक्रदंष्ट्रनखैस्तदा ॥ ६७ ॥

अवधीत्तानि रक्षांसि निष्प्रयासं वृकोदरः ।
कुसुमान्यवचिक्रायासौ स्वैरं चास्मात्सरोवरात् ॥ ६८ ॥

तत्रागम्य तदा तस्मिन् चिरयत्यतिशङ्कितः ।
तेनास्य चेष्टितेनाभूद्व्यथितः पाण्डवाग्रणीः ॥ ६९ ॥

विनयन् स विनीतं तं धर्मवादेन धर्मवित् ।
तस्माद्बदरिकामेव न्यवर्तत युधिष्ठिरः ॥ ७० ॥

धार्मात्मजे वसत्यत्र दारैश्च भ्रातृभिः सह ।
कदाचिदाययौ दैत्यो विप्रच्छद्मा जटासुरः ॥ ७१ ॥

भीमे बहिर्गते तस्मिन्नागतः पाण्डवान्तिकम् ।
सत्कृतो धर्मपुत्रेण तान्हरन्स बहिर्ययौ ॥ ७२ ॥

परं तु पथि भीमेन संगतेन यदृच्छया ।
पिपेष चूर्णपेषं स सृगालो हरिणा यथा ॥ ७३ ॥

गन्धं कदाचिदाघ्राय गन्धमादनसौभगम् ।
पश्यन्ती पाण्डवैः सार्धं तत्रैवास्त कृशोदरी ॥ ७४ ॥

तार्क्ष्यस्योड्डयमानस्य पक्षवातेन तत्क्षणम् ।
पञ्चवर्णप्रसूनानि विक्षिप्तानि महाहृदात् ॥ ७५ ॥

पञ्चवर्णैश्च पाञ्चाली पुष्पैराक्षिप्तमानसा ।
ययाचे पुष्पमानेतुं भीममेव पुनः स्वयम् ॥ ७६ ॥

प्रियायाः प्रियमानेतुं सहसा साहसप्रियः ।
तानि च प्रियपुष्पाण्यारुरोह तदचित्यकाम् ॥ ७७ ॥

सनाथा भीमसेनस्य कुसुमान्यवचिन्वतः ।
तत्रापि विघ्नमाचेरुः राक्षसा रूक्षहृदयः ॥ ७८ ॥

समरोद्घोषमुद्घुष्य समरव्यसनी रुषा ।
आपतन्नतिवेगेन ताडयामास राक्षसान् ॥ ७९ ॥

भीमप्रहारनिष्पिष्टा भीमारवविमूर्छिताः ।
पञ्चास्येनेव मत्तेभाः पञ्चत्वं प्रापिता क्षणात् ॥ ८० ॥

प्रधावन्नाययौ धर्मी तं देशं धर्मनन्दनः ।
तच्छब्देन तदा सर्वैः लोमशप्रमुखैः सह ॥ ८१ ॥

भीमस्यान्तिकमागम्य दृष्ट्वा तत्भीमसाहसम् ।
हीनकर्मेति तन्मत्वा तूणीभूतस्त्वभाषत ॥ ८२ ॥

अहिंसायास्तु तत्त्वेन किमुक्तेन पुनः पुनः ।
एवं साहसिको मा भूः प्रियमिच्छसि चेन्मम ॥ ८३ ॥

आनम्रशिरसां तेषामाययौ स्वगणैः सह ।
कुबेरः पाण्डुपुत्राणां पुरतस्तत्क्षणं क्षणात् ॥ ८४ ॥

अजातशत्रुमूचे तमजातमत्सरो मुदा ।
भीमस्य कर्मणा प्रीतो भीमज्येष्ठं धनाधिपः ॥ ८५ ॥

पुरा मे सुहृदा दर्पाद्धिक्कृतः स तपोधनः ।
शप्तवान्मां सखायं च कुपितः कुम्भसंभवः ॥ ८६ ॥

आवां तुष्टौ हि तेनैव शापादपि विमोचितौ ।
अहिंसापरमेव त्वं विदुष्यतस्तत्पराक्रमम् ॥ ८७ ॥

या क्रिया वेदनां कुर्यात्सतां च हृदि धर्मिणाम् ।
धर्मिज्ञगति धर्मज्ञैः सा हिंसेत्यभिधीयते ॥ ८८ ॥

प्रियं चिकीर्षुरद्य त्वां प्रियं वक्ष्यामि भारत ।
अर्जुनस्त्वमरलोकादचिरादागमिष्यति ॥ ८९ ॥

निवातकवचान् हत्वा नित्यदुष्टान्निशाचरान् ।
कालकेयांश्च पौलोमान् कालपाशे निपातयन् ॥ ९० ॥

विलसन्नद्य धर्मज्ञ विबुधैश्च बुधैर्भृशम् ।
प्रशंस्यमान एवासौ वर्तते वीरकेसरी ॥ ९१ ॥

सर्वे निवसतात्रैव सौख्येनैनं दिदृक्षवः ।
एवमुक्त्वाऽस्तशैलं स प्रययौ यक्षभूपतिः ॥ ९२ ॥

वचनममृतकल्पं दत्तसंकल्पमैन्द्रि
धनदमधुरनादैर्निःसृतं तन्निशम्य ।
अवसदिह सदारः सादरं तं प्रतीक्ष्य
विमलभुवि स साधुः सानुजो धर्मपुत्रः ॥ ९३ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
दशमः सर्गः ॥

---

# एकादशः सर्गः

पार्थोऽथ शक्र इव शक्ररथाधिरूढो
दिव्यास्त्रशस्त्रमणिभूषणभूषिताङ्गः ।
पित्राऽऽहितोत्तमकिरीटमहोत्तमाङ्गो
जेतुं निवातकवचान् स दिवः प्रतस्थे ॥ १ ॥

आदेशमात्मशिरसा निवहन्मघोनः
शच्या जिघांसुरिव दैत्यकुलं महत्या ।
संचिन्तयन्नथ तदेव स देवकार्यं
वीरो रथेन विरराज विशाखतुल्यः ॥ २ ॥

तस्मिन्विहायसि रथेऽपि पुरन्दरस्य
कामेन गच्छति कुमारमयूरतुल्ये ।
वश्येव पार्थविजये किल निर्निमेषा
कौन्तेयमेव पतिमैक्षत देवसेना ॥ ३ ॥

एकोऽपि योद्धुमसुरान्प्रययौ मदान्धा-
नाघ्रातपुष्पमवधीर्य यथा स्वधर्मी ।
तामुर्वशीमिव सुधीः किल देवसेना-
मादाय तन्मथनभूमिषु तेन साकम् ॥ ४ ॥

संस्तूयमानममरेन्द्रसुतं महद्भि-
र्वीरं नयन्नभसि मातलिरर्जुनं तम् ।
रात्रिंचरालयसमीपपदेन वेगं
गत्वा महोदधिमपश्यदगाधगर्तम् ॥ ५ ॥

आकाशवद्विपुलनीलकलेवराभं
दोलायमानजलसत्वतरङ्गलीलम् ।
भीमानुजस्तमुदधिं स विलोक्य भीम-
माश्चर्यपूरितमनाः क्षणमास्यदत्र ॥ ६ ॥

अब्धौ तु सन्ततसमुन्नतवीचिभेदै-
र्नाशाय सर्प इव सर्पति कुम्भजास्यम् ।
चन्द्रोदयाय तपने चरमाद्रिलीने ।
दर्पं ददर्श स जले च जलेचराणाम् ॥ ७ ॥

इन्दोः कलामपहसत्यथ फेनदन्तैः
कोपेन मर्दयति तीरशिलास्तरङ्गैः ।
आसीच्च कर्कशशरीरसमुद्रराजे
जिष्णुर्निवातकवचेषु च जातमन्युः ॥ ८ ॥

नावस्त्वनेकविधवस्तुनिधीर्वहन्तीः
संक्षुब्धसंहृतसमुद्धृतवीचिहस्तैः ।
पश्यन्नसौ शिथिलयन्तममुं पयोधिं
दैत्यान्निवातकवचान्विजयः समुहे ॥ ९ ॥

उज्जृम्भितं मदजलैरवलोक्य दुरा-
रसन्दिह्य शत्रुरिति चन्द्रमसं प्रहर्तुम् ।
पार्थः प्रमत्तमिव साधुरपश्यदब्धिं
चेष्टा हि मत्तमधुपस्य न साधुजुष्टा ॥ १० ॥

आलोकयत्कटककच्छपसंघसंघा-
वाचेष्टितं च विजयस्त्वथ कुञ्जराणाम् ।
एकत्र शंखपटलं प्रचरत्सवेग-
मन्यत्र मण्डलमसौ जलमण्डलीनाम् ॥ ११ ॥

उत्प्रेक्षिताश्च मकरा निशि तेन शैला
मग्नाः शतक्रतुभयादिति सागराप्सु ।
यश्चोर्मयो जिगमिषन्ति शशाङ्कबिम्बं
वल्गन्त इत्यनुमिताः गिरिराजशृङ्गम् ॥ १२ ॥

संघट्टनं तिमितिमिंगिलभीकराणां
दृष्ट्वा प्रमत्तमकरादिमहाझषाणाम् ।
घोरप्रमत्तकरिणामिव काननान्ते
संघाततोडनमिव स्वयमन्वमंस्त ॥ १३ ॥

नक्षत्ररूपमवलम्ब्य दिवं प्रयातं
संक्षुब्धसागरभयादिव रत्नजातम् ।
रत्नाकरेऽपि न हि दृष्टमनेन रत्न-
मालोकिताश्च गगने किल तेन ताराः ॥ १४ ॥

वेगादघूर्णत भयानकचण्डवायु-
रूध्वं किरंश्च रभसा किल सागरोर्मीः ।
घोराब्धिमेनमवलोक्य स धीरयोद्धा
तद्दानवालयमिहैव तदानुमेने ॥ १५ ॥

अत्रैव तूर्णमवतार्य रथं स सूतः
पार्थाय दानवपुरीं समदर्शयत्ताम् ।
श्रुत्वा तदम्बरतले रथगर्जनं ते
दृष्ट्वा रथं च चकिता भृशमेव दैत्याः ॥ १६ ॥

मर्त्योऽप्यमर्त्यरथसङ्गवशादमर्त्यः
सोऽभूदमर्त्यकवचाच्च किरीटयोगात् ।
इत्थं व्यचिन्तयदिह क्षणमिन्द्रसूतः
सौभाग्यवान्भवति सङ्गवशाद्धि लोकः ॥ १७ ॥

निश्चित्य शक्र इति तं भृशमात्मभीत्या
दैत्याः सखड्गशरचापगदादिहस्ताः ।
सम्भ्रान्तिमेत्य युगपत्पुररक्षकास्ते
द्वाराणि सुष्ठु पिदधुः पुररक्षणार्थम् ॥ १८ ॥

शंखं महास्वनयुतं किल देवदत्त-
मापूरयन्स मरुता ध्वनिना दिगन्तम् ।
संत्रासमद्रिपुगणानसुरान्जिगीषु-
र्विष्णुर्यथा मधुरिपुर्निजपाञ्चजन्यम् ॥ १९ ॥

शंखध्वनिः क्षितितलाद्ववृधे क्रमेण
भित्त्वा रुपेत्र महताऽम्बरमम्बुधिं च ।
निष्कम्पयन्सपदि दैत्यकुलं समूल-
मामभिन्नातकवचांश्च दिवं प्रपेदे ॥ २० ॥

खड्गत्रिशूलशरचापगदादियुक्ता-
श्चक्रैः रथैश्च विविधावरणैः समेताः ।
दैत्या निवातकवचाः कवचान्वितास्ते
प्रादुर्बभूवुरमुना युधि योद्धुकामाः ॥ २१ ॥

उग्रैस्तु तैश्च विकृतस्वररूपवन्ति
वाद्यानि तानि निखिलान्यपि वादितानि ।
शब्देन तेन सहसा मकरादिमत्स्याः
सम्मोहिताश्च पतिताश्च समुद्रतीरे ॥ २२ ॥

तं मातलिः समतले विजयं रथं च
प्राचोदयत्सनिपुणं रिपुमर्मभेत्ता ।
अग्रे प्रमत्तमहिषा विजयद्विपस्य
भ्रान्त्यापतन्दितिसुताः क्षणमन्तकस्य ॥ २३ ॥

अत्रान्तरे नभसि सन्निहिता महान्तो
देवाः सुरर्षय इहैव निरीक्षमाणाः ।
तस्थौ समीक्ष्य विजयं च जयं जयश्रीः
सर्वाङ्गसुन्दरमपाङ्गतरङ्गिताक्षी ॥ २४ ॥

सन्दिग्धवांस्तमवलोक्य स सूत इत्थं
कुन्त्यां पुराऽऽहितमिदं पुरुहूततेजः ।
संदश्यतेऽद्य भुवि फाल्गुनवीरमूर्त्या
मुक्तार्थमब्दरस एति किलाब्धिशुक्तिम् ॥ २५ ॥

तेषां च तस्य विजयस्य च संप्रहारान्
दृष्ट्वा महामुनिगणास्त्वमराश्च सर्वे ।
आश्चर्यपूरितहृदा सममस्तुवंस्तं
वाग्भिश्च वीरविजयं जयमुच्चरन्तः ॥ २६ ॥

आच्छाद्य तस्य रथमार्गमथेन्द्रसूनो-
राावृत्य दानवगणाः शतसंख्यया ते ।
बाणैर्निवातकवचान्तकमर्जुनाख्यं
वीरातिवीरमतिशूरमुपाद्रवंस्तम् ॥ २७ ॥

अन्ये क्रुधा मुमुचुरुग्रतरान्भुशुण्डीं-
स्तस्योपरीत्थमितरेऽपि शिताञ्छ्रिशूलान् ।
संनीयमानरथवेगवशाद्वृथा ते
तत्स्यन्दनोपरि निपेतुरधापि सर्वे ॥ २८ ॥

तीक्ष्णाशुगाश्च विविधा विविधप्रयोगै-
र्गाण्डीवदिव्यधनुषा महता विमुक्ताः ।
एकैकमेषु शतधा किल शाखितं खे ।
सर्वानहन् सपदि तानतिदुष्टचित्तान् ॥ २९ ॥

केचिन्निवातकवचास्त्वतिरूक्षनेत्राः
रौद्राश्च पश्चिमतलादपि यातुधानाः ।
दंष्ट्रोज्ज्वला भयकरा इव कालरूपाः
कौन्तेयमायुधधराः सहसाभ्यधावन् ॥ ३० ॥

अत्रान्तरे झटिति मातलिसंयतास्ते
धीरा हयास्तत इतः प्रसभं प्रचेरुः ।
मध्ये निवातकवचप्रमुखासुराणां
मथ्नन्त एव समरे तु सहस्रसंख्यान् ॥ ३१ ॥

एवं च वाजिखुरपातहताश्च केचि-
त्केचित्क्षताश्च रथनेमिभिरेवमन्ये ।
उग्राघोषमिन्द्रतनयस्य निशम्य केचि-
त्तस्थुस्तथैव सुचिरं भुवि नष्टचेष्टाः ॥ ३२ ॥

दिव्यं शताश्वरथमत्र नियन्त्रयन्तं
मध्ये महारथसहस्रनिशाचराणाम् ।
तं विक्रमन्तमवलोक्य स विस्मितोऽभू-
द्देवेन्द्रसारथिमनन्दितमिन्द्रसूनुः ॥ ३३ ॥

दैत्यास्तथापि युगपत्सुदृढं प्रजह्रुः
शूलैः शिलाभिरतितीक्ष्णशरैश्च सतम् ।
दृष्ट्वा तथाविधममुं युधि ताडयमानं
पार्थस्य तद्व्यथितमेव मनस्तु किंचित् ॥ ३४ ॥

गाण्डीवदिव्यधनुषो युगपद्गलद्भिः
फूत्कारशब्दमतिभीकरमुत्सृजद्भिः ।
जिष्णुः शरैस्सुरशूलशिलादिजातं
चिच्छेद तानपि जघान विना प्रयासम् ॥ ३५ ॥

केचिन्निवातकवचाश्चकितास्त्वधाव-
न्केचिन्निलिल्युरसुरा भुवि तत्र तत्र ।
आपुस्तथा कतिपया भुवि दीर्घनिद्रा-
मन्ये भयाच्च विजयाद्विजयं जहुस्ते ॥ ३६ ॥

पञ्चास्यवन्मदगजेषु पराक्रमन्तं
सर्पेष्वभिद्रुतमयूरमिवाचरन्तम् ।
मध्ये तदा विजयमल्ल निशाचराणां
दृष्ट्वा प्रहृष्टहृदयः स बभूव सूतः ॥ ३७ ॥

भीमा निवातकवचास्त्वमुमेव हन्तुं
भूयोऽपि तीक्ष्णतममस्त्रचयं वहन्तः ।
आविश्य युद्धभुवमर्जुनमभ्यधाव-
न्नुन्मत्तराशिशलभा इव दीपराशिम् ॥ ३८ ॥

ब्रह्मास्त्रमन्त्रमनुमन्त्र्य स वीरवीरो
यत्नं विना झटिति तीक्ष्णतरैश्च बाणैः ।
तेषां समुद्यममिदं विफलीचकार
कालाग्निकल्प इह कल्पितभाविकार्यः ॥ ३९ ॥

संतापिताश्च पशुमारमतन्द्रितेन
शक्रात्मजेन बहवो निहताश्च दैत्याः ।
मन्दास्तथापि विजयं किल नाविदंस्ते
तत्त्वं न वेत्ति महतां हि मदान्धलोकः ॥ ४० ॥

केचिन्निवातकवचास्त्वतितीक्ष्णकुन्तैः
शूलाश्च केचन पुनर्दधतः शतघ्नीः ।
अन्ये तु शीघ्रगतिभिर्निशितत्रिशूलै-
रापीडयन्पुनरपीन्द्रसुतं क्रुधा ते ॥ ४१ ॥

देवेन्द्रदत्तदयितेन निशाचराणां
शस्त्रास्त्रजातमखिलं विफलीकृतं तत् ।
कृत्तान्यनेन महताऽऽशु महाशुगैश्च
तेषां शिरांसि कठिनान्यपि निष्प्रयासम् ॥ ४२ ॥

भूयोऽपि ते निशिचराः शरवर्षपातै-
र्योद्धुं निवातकवचा विजयं बलिष्ठाः ।
आजग्मुरात्तशरमन्तकमन्तिमार्थे
सर्पाः समुद्धृतशिखा इव कृत्तपुच्छाः ॥ ४३ ॥

खड्गत्रिशूलशरतोमरपट्टिशाद्यै-
श्चिच्छेद तत्प्रहरणानि परंतपोऽसौ ।
गाण्डीविना बलवता विविधास्त्रपातैः
प्राणा झटित्यपहृताश्च निशाचराणाम् ॥ ४४ ॥

तीक्ष्णायुधैः सपदि संहृतदानवानां
गात्रैर्विसृष्टरुधिराम्बुनिधौ विलोक्य ।
कृत्तान्यनेककरपादशिरांसि तेषां
शेषास्ततो रणभुवस्तु भयादधावन् ॥ ४५ ॥

आविर्बभूव सहसैव महाश्मवर्षः ।
यं मायया समसृजन्परितश्च दैत्याः ।
माया च सा दृढमपीडयदर्जुनं तं
तेनाश्मवर्षमपि चूर्णितमस्त्रवर्षैः ॥ ४६ ॥

गाण्डीविनात्र महता विहतेऽश्मवर्षे
रात्रिंचरास्तु मुमुचुर्जलवर्षमस्मिन् ।
व्यामोहयत्तमिह या जलवर्षमाया
सा शोषिता विजयमुक्तविशोषणास्त्रैः ॥ ४७ ॥

वायुं तथा दितिसुतास्त्वपि माययाऽग्निं
दुर्बुद्धयः क्षणमिवात्र विसृष्टवन्तः ।
अग्निं यथा स सलिलास्त्रचयैः सलीलं
शैलाशुगैस्तु विजयो व्यधमच्च वायुम् ॥ ४८ ॥

क्रूराः क्षुधाऽथ युगपद्द्विविधां च मायां
सृष्ट्वा निवातकवचाः समपीडयंस्तम् ।
मायामयी भृशमुपाद्रवदर्जुनं सा
वृष्टिः शिलाग्निमरुतां महती महान्तम् ॥ ४९ ॥

मायामयः क्षणमथाविशदन्धकारः
सर्वेऽपि दिव्यहयो विमुखा बभूवुः ।
स प्रास्खलत्तपदि वासवसारथिश्च
तद्रश्मयस्तु भुवि पेतुरमुष्य हस्तात् ॥ ५० ॥

क्वासि क्व पार्थ कथयेति वदत्यजस्रं
भीमान्धकारकवलीकृतचित्तवृत्तौ ।
तस्मिन्तथा विगतचेतसि देवसूते
गाण्डीविनोऽपि हृदयं प्रविवेश भीतिः ॥ ५१ ॥

भीतः स पार्थमिदमाह सुरेन्द्रसूत-
स्तस्मिन्सुधार्थमदमेव सुरासुराणाम् ।
घोरे रणे शतमखस्य सुरेन्द्रसूनो !
सारथ्यमावहमिहैव पुरा च पार्थ ॥ ५२

अद्राक्षमर्जुन महासमराण्यपीत्थं
वैरोचनेः रणमुखेऽपि तथाहमासम् ।
वृत्रस्य चापि दनुजस्य वधे सुधीर !
दिव्या मयैव च हया युधि संगृहीताः ॥ ५३ ॥

युद्धानि तानि च कदाप्यतिदारुणेन
तुल्यत्वमाप्तुमिह न प्रभवन्त्यनेन ।
युद्धेषु तेषु न कदाप्यभवं तथाहं
भीतोऽधुनेव गतचेतन इन्द्रसूनो ॥ ५४ ॥

आकर्ण्य दीनवचनं सुरसारथेस्त-
त्पार्थः क्षणं समवलम्ब्य पुनः स्वधैर्यम् ।
दध्यौ सुधी निजजनानवभासयन्तीं
मायामयीं मदनहन्तुरुमां मुहूर्तम् ॥ ५५ ॥

मातस्त्वमेव शरणं शरणार्थिनं मां
दृष्ट्वा भवानि भव सम्प्रति मत्सहाया ।
मायां निवार्य दयया मनसि प्रकाशं
देवि प्रदेहि परिरक्षितुमेव धर्मान् ॥ ५६ ॥

त्रैलोक्यनाथदयिते करुणार्द्रचित्ते
सम्मोहिनि त्वमवलोकय पुत्रमेनम् ।
मायान्धकारकवलीकृतमर्त्यलोकं
माये प्रकाशय मदान्धमतीन्निहन्तुम् ॥ ५७ ॥

सर्वानपि त्वमसुरानमृतं पिपासू-
नुद्विग्नचञ्चलकटाक्षविसृष्टदृष्ट्या ।
माये न किं जननि मोहिनि मोहयित्वा
तेभ्यः सुधां स्वयमदाः सुरसं सुरेभ्यः ॥ ५८ ॥

लीलां निधाय विजयो हृदि विश्वमातु-
र्ध्यात्वा गिरीशवनयामपि मोहिनीं ताम् ।
संभिद्य तीव्रतिमिरं कृतवान्प्रकाशं
संप्रेष्य बाणमथ नाम स मोहिनीति ॥ ५९ ॥

मायासु तासु निहतासु महास्त्रशक्त्या
मायास्तु ते बहुविधाः व्यसृजन्समन्तात् ।
भूयोऽपि तीव्रतमसा सहसाऽऽवृताभू-
र्भूयोऽप्यभासत तदीयशरप्रभावात् ॥ ६० ॥

युद्धे पुनश्च हरिभिर्धुरि संगृहीते-
स्तत्स्यन्दनेन महता च सतिप्रकाशे ।
तं मातलिस्तत इतो व्यचरन्नयन्सन्
पार्थोऽपि दैत्यवधमात्तधनुः प्रकुर्वन् ॥ ६१ ॥

एवं निवातकवचान्तकघोरयुद्धे
मायामये क्षितितले सति वर्तमाने ।
सर्वेऽपि दानवगणास्तु न तत्र दृष्टाः
छन्नास्तदा हि सहसा निजमायया ते ॥ ६२ ॥

दृष्टा निवातकवचास्त्वमदृश्यमाना
दैत्यास्त्विहासत तदा युधियोधयन्तः ।
तत्राप्यदृश्यशरसंचयतीव्रपातै-
श्चिच्छेद सोऽपि कदलीलघु दैत्यकण्ठान् ॥ ६३ ॥

संहृत्य ते झटिति सर्वत एव मायाः
सर्वे च दानवगणास्तु तिरोबभूवुः ।
यातेषु तेषु युगपत्पुरतः स योद्धा
दैत्यान्ददर्श भुवि तेन हताननेकान् ॥ ६४ ॥

अश्वान् झटित्यसुरघोरकरैर्गृहीता-
नाच्छाद्यमानमतिभीमशिलोच्चयैः खम् ।
दृष्ट्वा च शैलशिखराणि पतन्ति वेगा-
दार्तो बभूव विजयोऽपि मनाक् स धीरः ॥ ६५ ॥

मृत्युं तथापि दनुजाः शरणं ययुस्ते
सर्वे निवातकवचास्त्वखिलाश्च मायाः ।
गाण्डीवतो दयितवज्रमुदीरयन्सन्
जिष्णुर्मुमोच हि शरान्निशितानेकान् ॥ ६६ ॥

केचित्प्रमत्तमहिषा इव कृत्तकण्ठाः
केचिच्च दन्तिन इवात्त वियुक्तदन्ताः ।
दैत्याः क्वचिच्च शिथिलीकृतशैलतुल्याः
दृष्टास्तथा विजयबाणहताः समूलम् ॥ ६७ ॥

सूतेन साकमतिदीर्घरणावसाने
पार्थो दिदृक्षुरथ दैत्यपुरीं प्रविष्टः ।
दृष्ट्वा पुरन्दरपुरीमतिरिच्यमाना-
मैश्वर्यसंचयवतीमतिविस्मितोऽभूत् ॥ ६८ ॥

कालो निवातकवचानतिदुष्टचित्ता-
न्मार्गयाद्वियोज्य युधि तानथ मारयित्वा ।
संयोज्य तत्र विजयं विजयश्रियाऽसा-
वन्यानपीदमनुबोधयितुं प्रतस्थे ॥ ६९ ॥

लक्ष्म्या गाढं स्वयमिव जयश्रीकराभ्यां कराभ्यां
भूयो भूयोऽप्यतिपुलकितं तं समाश्लिष्यमाणम् ।
आशंसन् सन् मधुरवचसा मातलिर्मुक्तकण्ठं
शक्रं वक्तुं विजयविजयं तेन सार्धं प्रतस्थे ॥ ७० ॥

# द्वादशः सर्गः

—:०:—

विजयो रथमध्यास्य विजयश्रीसमन्वितः
स्वर्गं नवोढया सार्धं गच्छन्नासीद्वरो यथा ॥ १ ॥

सोऽपश्यज्ज्योतिषां मध्ये महतीं काञ्चिदद्भुताम् ।
अद्वितीयां पुरीं रम्यामग्निसूर्यसमप्रभाम् ॥ २ ॥

विहायसि चकाशे सा सञ्चरन्ती महापुरी ।
स्वर्णवर्णप्रभा रम्या लक्ष्मीरिव पयोनिधौ ॥ ३ ॥

रत्नद्रुमैर्लसन्तीयं निनादैश्च पतत्रिणाम् ।
द्रुमाणां फलपुष्पैश्च चित्रवर्णैर्विचित्रिता ॥ ४ ॥

विचित्रैश्च महायन्त्रैः प्रभावैर्विविधैश्च सा ।
प्रचाल्यमानरम्योपग्रहकल्पेव संबभौ ॥ ५ ॥

हिरण्यवर्णसौधाग्रैः प्राकारैश्च हिरण्मयैः ।
रराजान्वर्थनाम्नेव सा हिरण्यपुरी भृशम् ॥ ६ ॥

संवृतेयं पुरी सम्यक् चतुर्द्वारवती सदा ।
पौलोमैः कालकेयैश्च गोपुराट्टालकान्विता ॥ ७ ॥

ऐश्वर्यकमनीया सा दुर्धर्षा निर्जरैरपि ।
पौलोमकालकेयानामासीत्स्रष्ट्रा कृते कृतम् ॥ ८ ॥

समृद्धसंपदा भाति वसन्तेनापि सेविता ।
सदोपवीज्यमाना सा सदागतिमता शनैः ॥ ९ ॥

अपि सौभाग्यवत्येषा दुष्प्रजाभिरभूत्पुरी ।
व्यथया पीडितान्ताया मुग्धाया बाह्यरूपवत् ॥ १० ॥

पुरी दैत्यपरीताऽपि वसत्येव कथंचन ।
अशोकवनमध्येऽपि दीर्घशोकेव जानकी ॥ ११ ॥

सा पुरी दानवैर्दुष्टैर्नित्यहृष्टैरधिष्ठिता ।
कालकेयैश्च पौलोमैर्वरशक्तिप्रभावतः ॥ १२ ॥

ते तपसाऽल्पदुःखत्वमवध्यत्वं च लेभिरे ।
महर्षियक्षगन्धर्वैः सुरराक्षसपन्नगैः ॥ १३ ॥

पप्रच्छ सारथिं साधुरभिक्रम्य पुरीमिमाम् ।
देवेन्द्रसूनुमूचेऽथ सस्मितं सोऽपि विस्मितम् ॥ १४ ॥

एते महासुरा देवैरवध्या एव पाण्डव ।
तस्मादेव वसन्त्यत्र निर्भया मुदिताश्च ते ॥ १५ ॥

तथापि मृत्युरेतेषां निर्दिष्टो वेधसा पुरा ।
मानुषेणैव दैत्यास्ते वध्या एव महात्मना ॥ १६ ॥

एतानपि विजित्य त्वं विमोचय महापुरीम् ।
रामेण मानुषेणैव लङ्का सीता च मोचिते ॥ १७ ॥

त्रायन्ते ते क्षतात् नूनं क्षत्रियाः स्युः क्षतानपि ।
धर्मसंस्थापनार्थं ते जायन्ते बद्धकङ्कणाः ॥ १८ ॥

एष धर्मो हितस्तेषां विहितो विश्वकर्मणा ।
न किं ते जन्म धर्मज्ञ क्षत्रियाणां कुलेऽनघ ॥ १९ ॥

त्वयैव किल वध्यास्ते दनुमारं निशाचराः ।
त्वद्विमुक्तशरव्यूहैः कृत्तकण्ठा युधि भुवम् ॥ २० ॥

गाण्डीवे भुजयोश्चैव तव सत्यपराक्रमे ।
विश्वसन्त्येव धर्मज्ञ विबुधादिदिवौकसः ॥ २१ ॥

केन्द्रीकृता वसन्त्यत्र संप्रतीक्ष्येव दानवाः ।
तेषां संघातमृत्युं ते शितबाणपथेन ते ॥ २२ ॥

मातलेस्तद्वचः श्रुत्वा मुदितोऽभूत्परंतपः ।
आनन्दमातनोत्येव वीराणां वीरविग्रहः ॥ २३ ॥

सामर्थ्येन नयन् पार्थं दिव्ययानेन सारथिः ।
त्रिदशेशद्विषां रम्यामाजगामाञ्जसा पुरीम् ॥ २४ ॥

याबत्तौ ददृशुर्दैत्यास्तावत्संभ्रान्तमानसाः ।
महावेगाः समुत्पेतुः प्रतिहन्तुं दितेः सुताः ॥ २५ ॥

नाराचैस्तोमरैर्भल्लैः प्रहरन्तो नराधिपम् ।
दनुजेन्द्राः क्रुधा धीरं यष्टिवृष्टिभिरप्यमुम् ॥ २६ ॥

एवं पराक्रमन्तस्ते शस्त्रवर्षेण धीमता ।
महता मन्त्रयुक्तेन मन्दास्तु प्रतिवारिताः ॥ २७ ॥

व्यामोहयच्च तान् सर्वान् रथमार्गैश्चरन् द्रुतम् ।
स विद्याबलमाश्रित्य बाणवर्षं सृजन् सुधीः ॥ २८ ॥

अन्योन्यमभिसंमूढा भूत्वा ते दानवास्तदा ।
अन्योन्यं प्राहरन् शस्त्रैरन्योन्यमभिदुद्रुवुः ॥ २९ ॥

एवं विमूढचित्तानां शिरांसि विशिखैरसौ ।
पार्थस्ताडितवान् दीप्तैर्दैत्यानां शतशः क्रमात् ॥ ३० ॥

पुरीमास्थाय तामूर्ध्वं हन्यमाना महासुराः ।
नयन्तस्ते समुत्पेतुर्भयादेव परंतपात् ॥ ३१ ॥

मायाविनो दधुर्दैत्या मायामास्थाय दानवीम् ।
खे चरन्तीं पुरीं दिव्यां कर्षन्तः कामगां बलात् ॥ ३२ ॥

बाणवर्षैस्ततस्तेषां मार्गमावृत्य सर्वशः ।
परंतपः क्रुधा दैत्यान् परान् तापितवान्भृशम् ॥ ३३ ॥

निपतन्तः क्षितेरन्तः पुनरूर्ध्वं च निर्गताः ।
वहन्तो दानवेन्द्रास्तु वरदानेन तां पुरीम् ॥ ३४ ॥

नीतवन्तः पुनस्तिर्यगब्धेरन्तः पुरीं पुनः ।
अमरावतिसंकाशामाकृष्यैवामरारयः ॥ ३५ ॥

अस्त्रजालैरविश्रान्तस्तीक्ष्णैर्बहुविधैरसौ ।
न्यग्रहीदसुरैः सार्धं दिव्यां दैवबलात्पुरीम् ॥ ३६ ॥

गाण्डीवात्संप्रयुक्तैस्तैः शरवर्षैः समन्ततः ।
वध्यमानास्तथा दैत्याः प्राघूर्णन्त भृशं भिया ॥ ३७ ॥

निशम्य तादृशं युद्धं निहतांश्च निशाचरान् ।
बोधयन्तं तथा जिष्णुं झटित्याह स मातलिः ॥ ३८ ॥

पश्य पश्यार्जुनात्र त्वं पापिष्ठान् त्यक्तजीवितान्
प्रक्षिप्तानिव शैलेभ्यो समुत्कृत्तशिलोच्चयान् ॥ ३९ ॥

अत्रापि पश्य कौन्तेय भूमौ रुधिरवाहिनीम् ।
वहन्तीं निशितैरस्त्रैर्निहतानां कलेवरान् ॥ ४० ॥

प्रभ्रष्टाऽथ पुरी तेभ्यो वेगादभ्यपतद्भुवि ।
रथेन गगनाद्भूमिं देवस्तोऽप्यवातरत् ॥ ४१ ॥

दृष्टाः सहस्रशस्तत्र रथिनस्तेन दानवाः ।
सन्नद्धा जिष्णुनाऽमर्षा योद्धुकामा महाबलाः ॥ ४२ ॥

एते दैत्या हता बाणैरपरेऽप्यागताः पुनः ।
तेऽपि तद्वद्धताश्चान्ये पुनर्योद्धुं समागताः ॥ ४३ ॥

इत्थं गतागता दैत्याः समुद्रोर्मिवदाहवे ।
अक्षय्यास्ते समागम्य तस्थुस्तत्परितः क्षणात् ॥ ४४ ॥

अपीडयन्महाशस्त्रैः पीडयन्तं तमर्जुनम् ।
बाणान्बाणैस्तु निघ्नन्तो मत्तेभा इव दानवाः ॥ ४५ ॥

विचित्ररथमार्गेषु विचरन्तो महारथाः ।
विचित्रास्तेन संदृष्टा विचित्रमकुटध्वजाः ॥ ४६ ॥

विचित्रकवचाद्यैस्ते तं विचित्रविभूषणैः ।
अयतन्त विचित्रास्त्रैर्व्यामोहयितुमर्जुनम् ॥ ४७ ॥

उच्चैरुद्घुष्य ते दैत्या मेघगर्जनगर्जनैः ।
पीडयामासुरत्यन्तं भीकरास्त्रैरमुं रुषा ॥ ४८ ॥

नाशक्नोत्स तु गाण्डीवी तीक्ष्णैरपि महायुधैः ।
उत्पीडयितुमुद्युक्तानुत्पीडयितुमाहवे ॥ ४९ ॥

अजन्यस्मिन्महाजन्ये जिष्णोरपि महाभयम् ।
सस्मार शङ्करं पार्थो देवदेवं दयानिधिम् ॥ ५० ॥

धावत्सु सर्वजीवेषु कालकूटे समागते ।
अखिलानवितुं लोकान् भवानेवापिबद्विषम् ॥ ५१ ॥

हृत्वा समस्तपापानि हृदये विहरन् भवान् ।
भक्तेभ्यस्तारकं दत्त्वा भवं वारयति प्रभो ॥ ५२ ॥

संरक्षितुं भवान् भक्ताननुगच्छति सर्वदा ।
दुष्टेभ्यश्च भयेभ्यश्च रक्ष मां पार्वतीपते ॥ ५३ ॥

भगवांश्च भवानेव भवोऽपि भवतारकः ।
मायावी चास्ति मायी च जगत्कार्यं च कारणम् ॥ ५४ ॥

स्रष्टा सृष्टश्च मे भाति राज्यं राज्याधिपस्तथा ।
परमात्मेति सर्वेषामन्तरात्माऽसि देहिनाम् ॥ ५५ ॥

दुष्टानेतान् कथं हन्यां साधून् संरक्षितुं भयात् ।
दुष्टसंहारमूर्ते मामनुगृह्णीष्व साम्प्रतम् ॥ ५६ ॥

इति मृत्युञ्जयं धीमानन्तरात्मानमात्मना ।
नेत्रे निमील्य तत्रैव तस्थौ साम्बं हृदि स्मरन् ॥ ५७ ॥

क्षणात्स्मृतिपथं प्राप्तं दिव्यं पाशुपतं महत् ।
तदेवास्त्रं यदर्थं तत्तपस्तप्तं तदा वने ॥ ५८ ॥

यद्रौद्रमिति विख्यातं सर्वशत्रुविनाशनम् ।
तदस्त्रं स्वस्ति भूतेभ्य इत्युक्त्वा संदधे महत् ॥ ५९ ॥

गाण्डीवस्पर्शमात्रेण अज्वालास्त्रं महाभया ।
कश्चिदाविरभूद्यास्य पुरतस्तत्क्षणं महान् ॥ ६० ॥

मण्डिताङ्गमसौ नागैः कृत्तचीरं व्यलोकयत् ।
त्रिशीर्षं तं महादीप्तं षड्भुजं नवलोचनम् ॥ ६१ ॥

ध्यायन् भक्त्या त्रिणेत्रं तमभिमन्त्रं समुच्चरन् ।
दानवेभ्यो विमुच्यर्यं तदस्त्रं स विमुक्तवान् ॥ ६२ ॥

नानारूपाणि तद्बाणाद्विसृष्टानि समन्ततः ।
भयङ्कराणि रौद्रेऽस्मिन्मुक्तमात्रे महाशुगे ॥ ६३ ॥

भल्लूकव्याघ्रसिंहाश्च वृषभा महिषास्तथा ।
मत्तेभा वन्यमार्जाराः शरभाश्च बहिर्गताः ॥ ६४ ॥

तदस्त्रं व्यसृजद्गृध्रानुलूकांश्च गरुत्मतः ।
वानरांश्च वराहांश्च कुक्कुरांश्च वृकान् बहून् ॥ ६५ ॥

वीरान् शस्त्रास्त्रहस्तांश्च शूरानपि महारथान् ।
असृजद्रौद्रमस्त्रं तद्यक्षभूतांश्च सर्वशः ॥ ६६ ॥

एतैरन्यैर्महासत्त्वैर्नानारूपधरैर्जगत् ।
चतुरास्यैश्चतुर्दंष्ट्रैर्व्याप्तं सर्वं भयानकैः ॥ ६७ ॥

गाण्डीवनिःसृताद्रौद्रात्सत्त्वैरेतैर्बहिर्गतैः ।
रौद्रादिभिस्तदा दैत्याः क्षणादापुर्महाभयम् ॥ ६८ ॥

गाण्डीवी चापि गाण्डीवात्प्रेषयामास सायकान् ।
मध्ये मध्ये महाशक्तानत्यमेव समन्ततः ॥ ६९ ॥

संदष्टा दंष्ट्रदन्तैश्च केचिद्दण्डैश्च दण्डिताः ।
केचित्कृत्ता नखैर्वक्रैस्त्रिशूलैश्च विदारिताः ॥ ७० ॥

केचित् व्याघ्रैश्च सिंहैश्च वराहैः केचिदाशुगैः ।
यक्षभूतपिशाचैश्च केचिद्दैत्याश्च मारिताः ॥ ७१ ॥

पीलवादिभिः शरैरन्यैः गाण्डीवनिःसृतैः शितैः ।
विनाशमगमन्दैत्या वध्यमाना दयां विना ॥ ७२ ॥

जृम्भकैरस्त्रामर्षैर्जिष्णुः पावकैर्गारुडैस्तथा ।
वायवैर्वारुणैर्बाणैर्नाशयामास दानवान् ॥ ७३ ॥

कालकेयाश्च पौलोमाः सायकैः कालचोदिताः ।
कालसत्त्वैरमीभिस्ते सर्वे कालवशं गताः ॥ ७४ ॥

गगनादपतन् भूम्यां गतप्राणा महासुराः ।
कृत्तकण्ठा वियुक्ताङ्गा रुधिराप्लुतमूर्तयः ॥ ७५ ॥

हतदैत्यमहासत्वान् वहन्तीं रक्तवाहिनीम् ।
विलोक्य विस्मितः पार्थः सस्मार परमेश्वरम् ॥ ७६ ॥

तदा तस्योत्तमाङ्गे ते संतुष्टास्त्वातुरुत्तमाः ।
पुष्पवृष्टिं दिवो देवा वर्षयामासुरञ्जसा ॥ ७७ ॥

उर्वश्यपि तदा स्वर्गे नूनं विगतमत्सरा ।
साकं देवाङ्गनाभिः सा नृत्तं चक्रे स्वयं मुदा ॥ ७८ ॥

स्मारं स्मारं त्रिलोकेशं शङ्करं भक्तवत्सलम् ।
भक्तिप्रवाहवाचाऽसौ तोषयामास फाल्गुनः ॥ ७९ ॥

भरक्षस्त्वं हत्वाऽखिलनिशिचरानद्य निखिलं
सलीलं लोकं ते परमकृपया भूतदयया ।
सदानन्दैरस्यं मामुपकरणीकृत्य समरे
ध्रुवं कीर्तिं चारोपयितुमिह मन्येव महतीम् ॥ ८० ॥'

अम्बर्युर्धरणी रवीन्दुदहनास्तोयं वियद्वायुरि-
त्याद्याभिश्चिदचिद्गुणैः परिवृतं विश्वं वपुस्ते न किम् ।
त्वं विश्वं ध्रुवमेव च प्रभविता विश्वस्य विश्वाधिको
विश्वात्मन्नहमद्य विश्वसिमि ते लीलाविनोदे विभो ॥८१॥

उमापते मङ्गलमेव सर्वदा
त्वमेव भक्ताननुचिन्तयन् विभो ।
चिकीर्षुरेतानतुगच्छसि प्रभो
नमो नमस्ते शशिशेखरानिशम् ॥ ८२ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
द्वादशः सर्गः ॥

## त्रयोदशः सर्गः

—:o:—

सुरासुराणाञ्च दुरासदं तत्
दृष्ट्वा महत्कर्म सुरेन्द्रसूनोः ।
पार्थं जगादाथ मुदान्वितः सन्
देवेन्द्रसूतस्तु कृताञ्जलिस्तम् ॥ १ ॥

पराक्रमं वर्णयितुं तवेदं
को वाऽत्र शक्नोत्यपि जन्ममेतत् ।
संघातमृत्युं च शरैः परेषा-
मेकेन मर्त्येन कृतं महात्मन् ॥ २ ॥

गन्तुं च यां स्प्रष्टुमथ प्रवेष्टुं
सुरेन्द्रसूनोऽत्र न कोऽपि शक्तः ।
वीर्येण बाह्वोश्च तव प्रभावात्
खे संचरन्ती मथिता त्वया सा ॥ ३ ॥

दैत्येषु युद्धे निहतेषु तस्यां
पुर्यां भिया त्वद्वशमागतायाम् ।
दैत्यस्त्रियस्तत्क्षणमेव सर्वाः
पुर्याश्च निष्पेतुरधो धरण्याम् ॥ ४ ॥

त्वमेव पश्यार्जुन चक्षुषा ते
दैन्यामवस्थामवनीतलेऽस्मिन् ।
सुखात्तु दुःखे पतितास्त्वसह्ये
कथं सहेरन्कथयातिखेदम् ॥ ५ ॥

विश्लिष्टकेशा व्यथिता भृशं ता
यथा स्वपत्युर्विरहात्कुरर्यः
हा पुत्र हा तात सहोदरेति
दीनार्तनादैः प्रलपन्ति नार्यः ॥ ६ ॥

उत्सृज्य वेषांश्च विभूषणादी-
नुच्चैस्तरं वक्षसि ताडयन्त्यः ।
उत्कृत्तशाखा इव भूरुहाणा-
मुर्व्यां पतन्ति स्वयमार्तशब्दैः ॥ ७ ॥

दाराश्च दैत्येषु हतेषु केचित्
प्राणाञ्जहुः प्राणपतीनुपेतुम् ।
केचिच्च जग्मुर्युगपज्जलान्तः
भग्नाशया बाधितजीवितान्ताः ॥ ८ ॥

कौन्तेयबाणाभिविनष्टकान्ताः
कान्तिं विना काश्चन दीप्तवह्नौ ।
कान्तं प्रयातुं सहसा कृतान्ताः
संतापदग्धा वनिता नितान्तम् ॥ ९ ॥

क्षता पुरी सा न तु दीनकण्ठा
नाथा हताश्चापि न शोकमग्ना ।
वियुक्तरागेव विहारभूमि-
स्त्वां पश्यति स्वय्यनुरक्तकण्ठा ॥ १० ॥

आप्लुष्टदेहेयमशुद्धरक्तै-
विश्लिष्टकेशा विकृतानना च ।
दृश्या पुरी नैव तथापि जिष्णो
गम्या तु नारी कथमार्तवस्था ॥ ११ ॥

शुद्धोदकस्नानमवाप्य पथ्या-
न्नाद्योपहारा नववेषवस्त्रा ।
सानन्दमेषा किल सानुराग-
मारोहणीया पुनरिङ्गितज्ञैः ॥ १२ ॥

मन्दाकिनीवारिणि कुन्तिपुत्र
स्नानं कुरु त्वं विधिवद्विधिज्ञ ।
पश्चात्पवित्रीकृतगात्रवान् सन्
आरोह दिव्यं रथमिन्द्रसूनो ॥ १३ ॥

धैर्येण कर्मण्यतिरिच्यसे त्वं
देवेन्द्रमप्यद्य रणे गुरुं ते ।
आचामदर्णव किल कुम्भजन्मा
कुम्भाम्भ एवावहतीह कुम्भः ॥ १४ ॥

आकर्ण्य वाचं सुरसारथेस्त-
न्मन्दाकिनीमन्दसमीरणेन ।
संवाह्यमानो भृशमर्जुनोऽसौ
स्नात्वाविशुद्धो रथमारुरोह ॥ १५ ॥

जेतारमिन्द्रात्मजमिन्द्रसूत-
स्तं कालकेयादिमहासुराणाम्
सन्तुष्टचित्तं सहसातिहृष्टः
पार्थं रथेनानयदिन्द्रसौधम् ॥ १६ ॥

शक्रात्मजः सारथिदत्तहस्तो
मन्दं स धीरोऽवततार मान्यः ।
विमानसोपानपथैः पदाभ्याम्
तत्स्यन्दनात्स्वर्गतले मघोनः ॥ १७ ॥

सप्तर्षिभिः सार्धमतीव तुष्टाः
पूज्यान्पुरस्कृत्य महर्षिवर्यान् ।
देवाश्च सिद्धाश्च सपर्ययाभिः
प्रत्युद्ययुस्तं नवपूर्णकुम्भैः ॥ १८ ॥

नीराजयन्तः प्रशशंसुरेते
दीपार्चिषा स्वर्णसमप्रभाभिः ।
पुण्याहवाचैरुपमन्त्रितैर्जलै-
र्देवर्षिमुख्यैः परिपावितं तम् ॥ १९ ॥

स्वर्गाङ्गनाः स्वागतवाचमूचुः
पुष्पोपहारैरतिगन्धयुक्तैः ।
पीयूषकुम्भैरुपशोभमानाः
मनोज्ञरूपाय मनोज्ञवेषाः ॥ २० ॥

अलंकृतो जिष्णुरलंकृतैस्तै-
स्ततः प्रतस्थे सुरराजमार्गैः ।
ऐरावतस्थः सुरवासिमुख्यै-
रनुप्रयातः सुरराजगेहम् ॥ २१ ॥

सौधाग्रसंलग्नमहाध्वजानां
मन्दानलाविद्धतरङ्गिताग्रैः ।
वर्णांशुकैः पाण्डवमाह्वयन्ती
तं स्वर्गलक्ष्मी भृशमुल्ललास ॥ २२ ॥

आयान्तमेनं विजयं महान्तं
प्रागेव ते संनिविडाश्च देवाः ।
पार्श्वद्वयोर्दीर्घपथेषु मान्यं
संद्रष्टुकामा वनिताश्च तस्थुः ॥ २३ ॥

पश्चात्स्ववद्गच्छति पाण्डुपुत्रे
पार्श्वद्वयाभ्यां व्यकिरन्युवत्यः ।
लाजाञ्जलीनर्जुनवीरशीर्षे
दीर्घाक्षिकोणेन विलोकयन्त्यः ॥ २४ ॥

मन्दैर्मरुद्भिश्चितता मरन्दैः
स्वर्गस्थमार्गा मुदितैः सलीलम् ।
मन्दाकिनीनिर्झरशीकरार्द्रैः
सिक्ताश्च निष्यन्दमधुप्रसूनैः ॥ २५ ॥

संवीक्ष्य काश्चिन्मदनोपमं तं
संस्पृष्टचित्ता विजयेन नार्यः ।
स्तम्भान्परिष्वज्य तथैव गाढं
स्वर्गस्त्रियोऽपि प्रतिमा इवासन् ॥ २६ ॥

अलंकृताभिर्मणिकुण्डलाद्यै-
र्विभूषणैरप्यतिकोमलाभिः ।
नालं कृतं नाकवधूभिरार्यं
विलोकयन्तीभिरनङ्गदग्भिः ॥ २७ ॥

काश्चित्स्तनाभ्यां गलितं दुकूलं
नालोकयंस्तं तु विलोकयन्त्यः ।
संपीडयन्त्यस्त्वधरं कराभ्यां
काश्चित्तथाऽऽसन्परिगृह्य नीवीम् ॥ २८ ॥

उर्वश्यपीन्दीवरवर्णनेत्रा
पूर्वापराधेन तु पीडयमाना ।
सौधाग्रवातायनलग्नदेहा
पार्थं तथा वीक्ष्य शिलेव तस्थौ ॥ २९ ॥

उज्जृम्भमाणस्तनभिन्नवस्त्रा
समर्प्य सा बाहुमसत्यकण्ठे ।
आश्लेषयन्ती प्रतिमाश्च काश्चि-
न्निश्वस्य दीर्घं मनसैव रेमे ॥ ३० ॥

कल्पद्रुमास्तरक्षणमुत्तमाङ्गे
शक्रात्मजस्यास्य तु दैत्यहन्तुः ।
आपर्वभागोत्थितबाहुभिस्ते
पीयूषगर्भप्रसवैरसिञ्चन् ॥ ३१ ॥

ऐरावतादिप्रमुखा गजेन्द्राः
संवीजयन्तिस्म सलीलमस्य ।
तेषां च तालव्यजनोपमैस्तै-
र्जिष्णोः समन्तादिव शूर्पकर्णैः ॥ ३२ ॥

पश्चात्पुरस्कृत्य बृहस्पतिं ते
देवर्षिमुख्याः पुरुहूतवाचा ।
संस्कारयामासुररिन्दमं तं
शुद्धोदकैर्मन्त्रमुदीरयन्तः ॥ ३३ ॥

संपावितं तीर्थजलैरनेकै-
र्जिष्णोस्तदाऽनुत्तममुत्तमाङ्गम् ।
स्पृष्ट्वा कराभ्यां स शुभंकराभ्या-
मन्वग्रहीत्तद्यशसे सुरेशः ॥ ३४ ॥

आखण्डलं सर्वमपि स्वयं तं
देवेन्द्रपुत्रेण रणे कृतं यत् ।
संश्रावयामास सविस्तरं त-
त्सुश्लाघ्यकर्म स्वमुखेन सतः ॥ ३५ ॥

आनन्दबाष्पैरभिषिच्य वत्सं
वेगात्समुत्थाय गुरुः कराभ्याम् ।
आश्लिष्य पार्थं कृतदेवकार्यं
पुरंदरः स्वीकृतवान्कृतज्ञः ॥ ३६ ॥

अर्धासने च स्वयमेव सूनुं
शनैरुपावेश्य शचीसमेतः ।
घृणा तमूचे परिलालयन्सन्
आघ्राय मूर्धानमतिप्रहृष्टः ॥ ३७ ॥

द्रोणश्च भीष्मश्च कृपश्च कर्णो
दुर्योधनाद्यैः शकुनिश्च सार्धम् ।
अर्हन्ति युद्धे तव षोडशीं तां
द्रष्टुं कलां ते न कदापि पार्थ ॥ ३८ ॥

अस्त्राण्यमूनि प्रियपाण्डुपुत्र
त्वय्येव तिष्ठन्तु महान्ति वीर ।
इमान्प्रमत्तान्किल भावियुद्धे
सम्यक्प्रयोगार्थमरीन्निहन्तुम् ॥ ३९ ॥

सूनो तनुत्राणममेयमेत-
द्ददामि तुभ्यं कवचं दृढं च ।
शक्नोत्यनेन ध्रुवमात्मवक्ष-
स्त्रातुं शरेभ्योऽप्यतितीक्ष्णवक्त्रः ॥ ४० ॥

आस्तां ममेयं सुखदा मनोज्ञा
स्वय्येव चामीकरदिव्यमाला ।
या सान्त्वयित्वा सुखमातनोति
त्वं संयुगे पाण्डव ताडितश्चेत् ॥ ४१ ॥

उक्त्वैवमिन्द्रः प्रददौ च शङ्खं
नाम्ना तदीयं किल देवदत्तम् ।
उच्चस्वनोपेतमतिप्रभान्तं
पार्थाय तस्मै भयदं रिपुभ्यः ॥ ४२ ॥

पश्चात्स रत्नैः खचितं महार्हं-
दिव्यप्रभावं निदधे किरीटम् ।
तदीयसन्तुष्टहृदन्तराङ्गः
स्वाभ्यां कराभ्यां तनयस्य मूर्ध्नि ॥ ४३ ॥

उद्घोषयद्भिर्मुरजादिवाद्यै-
र्मन्त्रानुसारैर्विजयस्य वीर्यम् ।
उच्चैर्वदन्त्यो जगदन्तरस्था-
ज्जनांस्तदासन्मुखरीकृताशाः ॥ ४४ ॥

पार्थः किरीटीति किरीटधारी
नामापि लेभे यशसार्जितं तत् ।
वर्धेत कान्तिः कनकाश्रयेण
सत्यं मणीनामिति वेत्ति लोकः ॥ ४५ ॥

सन्तुष्टचित्ताप्सरसस्तदानीं
तत्रामराणां ननृतुः सभायाम् ।
गन्धर्वनार्यस्तु जगुः सदर्पं
तद्दैत्यजेतुश्चरितं च वीर्यम् ॥ ४६ ॥

एतैर्विकारं न जगाम जिष्णो-
श्चित्तं तदा चिन्तयतः शिवं तम् ।
यस्य प्रभावादसुरान्निहन्तुं
सर्वानशक्तोऽस्य तु शक्रशत्रुः ॥ ४७ ॥

अत्रान्तरे तत्र किरीटिनं तं
संद्रष्टुकामौ गिरिजागिरीशौ ।
आजग्मतुर्जिष्णुमनुग्रहीतुं
सर्गस्य मातापितरौ महान्तौ ॥ ४८ ॥

मन्त्रैर्मुनीनां मधुरैश्च गानैः
पञ्चेन्द्रियाकर्षणपञ्चवाद्यैः ।
उज्जृम्भिताशा मुदिता चकाशे
ज्योतिःसमूहैरधिकं दिवःश्रीः ॥ ४९ ॥

देवाश्च संदृश्य समुत्थितास्ते ।
शक्रादयस्तौ बहुमानपूर्वम् ।
प्रत्युद्ययुर्दिव्यसपर्ययाभि-
र्देवर्षिभिः सार्धमुमामहेशौ ॥ ५० ॥

दयापर स्वागतमार्तबन्धो
कारुण्यसिन्धो करुणार्द्रदृष्ट्या ।
अनुग्रहीतुं स्वजनानिदानीं
विशिष्य जेतारमिहासुराणाम् ॥ ५१ ॥

इति ब्रुवन्नेव समेत्य शम्भुं
नीराजयन्सन् मकुटप्रभाभिः ।
भक्तिप्रकर्षाच भवं भवानीं
सप्राञ्जलिः सत्कृतवान्सुरेशः ॥ ५२ ॥

स नीलकण्ठस्य पदोपकण्ठं
पार्थस्तु गत्वा विनयेन नम्रः ।
शम्भो महादेव नमः शिवाय
भक्ताधिवासेति नमश्चकार ॥ ५३ ॥

उत्थाप्य शम्भुर्विजयं कराभ्यां
स्नेहात्स्पृशन्सन् हृदयेन कर्षन् ।
आश्लिष्य गाढं निजवक्षसा त-
माश्वासयन्नित्थमुवाच वाचम् ॥ ५४ ॥

धनंजयाग्रेसर धर्मयुद्धे
प्रीतोऽस्म्यतीव त्वयि धर्मबुद्धे ।
स्वार्थं विहाय त्वमहद्धि दैत्या-
न्नित्यं सुराणां परिरक्षणार्थम् ॥ ५५ ॥

अस्मिन्मुहूर्ते प्रददामि दिव्ये
कौन्तेय तुभ्यं किल वाञ्छितार्थम् ।
तत्पृच्छ जिष्णो हृदयेप्सितं ते
जेता निहन्तासि निशाचराणाम् ॥ ५६ ॥

भक्तिप्रवाहादुपरुद्धकण्ठः
शम्भुं स भक्तिप्रियमायताक्षः ।
सप्रश्रयं साञ्जलिरब्रवीच्च
नास्त्येव वाञ्छा भवदाश्रितानाम् ॥ ५७ ॥

यस्य प्रसीदस्यनुकम्पया त्वं
तस्यैव भक्तिस्त्वयि शंकरेऽस्ति ।
यस्त्वां सदा पूजयति स्वचित्ते
तं पश्यसि त्वं कृपया महेश ॥ ५८ ॥

संपीड्यमानेष्ववनौ महत्सु
शम्भो ममैषा जगदीश वाञ्छा ।
गौरीश गङ्गाधर चन्द्रचूड
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ५९ ॥

कामेन मोहेन वशीकृतानां
लोकेषु कारुण्यवतां धियोऽपि ।
दुष्टेषु कृत्येषु नयन्ति चित्तं
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ६० ॥

दीनेषु दृष्टेष्वपि मर्त्यलोके
दारिद्र्यदुःखेन कलङ्कितेषु ।
लक्ष्मीवतां नास्त्युपकारचिन्ता
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ६१ ॥

रम्येषु हर्म्येषु सुखं वसन्तः
संतापगर्ते पतितानसह्ये ।
क्लेशान्न पश्यन्ति कृपार्द्रदृष्ट्या
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ६२ ॥

निन्द्यप्रवृत्तौ निपतन्ति नार्यः
क्षोणीशदुष्प्रेरणया बलाद्वा ।
दारिद्र्यदुःखात्परिपीड्यमानाः
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ६३ ॥

निष्कारणं दुर्बलवन्तमुर्व्या-
मस्यां बलिष्ठास्तवबलाजनं च ।
निघ्नन्ति हन्त क्षणसौख्यमाप्तुं
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ६४ ॥

काश्चित्तु नार्यो भुवि काञ्चनार्थे
घ्नन्त्येव साधून्पुरुषाश्च केचित् ।
कामेन वा कामुकिकारणाद्वा
कारुण्यसिन्धो करुणा भुवि स्यात् ॥ ६५ ॥

आकर्ण्य शम्भुः परिशुद्धचित्ता-
द्विनिर्गतां तां विजयस्य वाञ्छाम् ।
प्रीतोऽभवत्तस्य तु धर्मबुद्ध्या
वशीकृतः सन् प्रशशंस पार्थम् ॥ ६६ ॥

अग्रेसरस्तिष्ठसि धर्मिणां त्व-
मेभिर्वचोभिः पुलकाङ्कितोऽहम् ।
सत्यं त्वमेवाद्य यथार्थराजो
येनास्यनुक्रोशमना जनेषु ॥ ६७ ॥

भवन्ति नाथा यदि धर्मनिष्ठाः
तेषां प्रजास्तर्हि चरन्ति धर्मान् ।
दुष्टा भवेयुर्यदि नायकास्ते
तद्वद्भवेयुर्भुवि तज्जनाश्च ॥ ६८ ॥

नाथानवन्यामचिरेण दुष्टां-
स्तान्धर्मयुद्धेन हनिष्यसि त्वम् ।
उक्त्वेदमद्रेः सुतया समेत-
स्तिरोदधे तत्क्षणमन्तरीक्षे ॥ ६९ ॥

सुरपतिरथ पार्थं सान्त्वयित्वा वचोभिः
पुनरपि समुपावेश्यान्तिके कुन्तिपुत्रम् ।
स बहुभिरुपचारैरर्जुनं मानयन्तं
निकटमुपविशन्तं नैव जज्ञे जयन्तम् ॥ ७० ॥

रम्यं वसन्ततिलकं तिलकं यथास्ते
इन्दुर्यथा लसति फाल्गुनपूर्णिमायाम् ।
अग्निर्लसत्यतितरां च यथा निशायां
पार्थोऽपि तत्र विरराज तथा सभायाम् ॥ ७१ ॥

सुरैश्च देवर्षिगणैरतिस्तुतं
विलोक्यमानं विधिनापि सादरम् ।
स भक्तिमाहात्म्यमुवाच वासवः
स्वपुत्रमर्घासनसन्निवेशितम् ॥ ७२ ॥

भक्तिः कदापि न भवेद्रतिभावभेदो
वृत्तिर्हृदो गुरुजनाभिमुखी न भक्तिः ।
सेवा न भक्तिरिति चक्षुमलं कदाचित्
ज्ञानप्रवाह इति चापि जनैर्न वाच्या ॥ ७३ ॥

भक्तिः परा ध्रुवमनिर्वचनीयशक्ति-
रात्मानमेत्य मनुजस्य हृदन्तराङ्के ।
अद्वैतभावमवलम्ब्य विराजमाना
संयोजय जीवमचिरात्परमात्मना या ॥ ७४ ॥

मन्दाक्रान्ता मधुरवचनैः शक्तिरन्योन्यभावा
भक्तं भक्तप्रियमपि जनं मङ्गलात् मङ्गलं या ।
आनीयान्ते घटयति दृढं नित्यमुक्तेन मुक्तं
निःसन्देहं सहृदयजनैरुच्यते सैव भक्तिः ॥७५॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
त्रयोदशः सर्गः ॥

## चतुर्दशः सर्गः

अथैकदा देवपतिः परंतपं
प्रियं समाहूय समीपमात्मजम् ।
उवाच मन्दस्मितगुम्फिताक्षरैः
परामृशन्धर्मगतिं युगे युगे ॥ १ ॥

गतिस्तु धर्मस्य भुवौ धनंजय
सनातनी नैव समं प्रकाशते ।
अवेह्यसौ भिन्नतया युगे युगे
विभिन्नरीत्या विजय प्रवर्तते ॥ २ ॥

निबोध धर्मस्तु कृते युगे स्वयं
सदैव पूर्णत्वमवाप्य वर्तते ।
न यान्त्यमुष्मिन्भुवि वा क्षयं क्वचि-
द्भयं कदाप्यत्र युगोत्तमे प्रजाः ॥ ३ ॥

तदा न सर्पा न च यक्षराक्षसा
जगत्सु नासन्सुरदानवादयः ।
ऋगादिवेदाश्च तथैव नाभव-
न्नचैव तस्मिन्क्रयविक्रया युगे ॥ ४ ॥

न चाप्यसूया रुदितं कृते युगे
प्रजासु वर्णा न बभूवुराश्रमाः ।
जनेषु दर्पो न तथेन्द्रियक्षयो
न विग्रहोऽभून्न मदं न पैशुनम् ॥ ५ ॥

न चैवमीर्ष्या न च मत्सरोऽभव-
न्न चापि सन्तप्तमना जनः क्वचित् ।
तथा विभागास्तु महीसुरादयः
प्रजासु तस्मिन्न युगे कृते कृताः ॥ ६ ॥

समानमन्त्रक्रियया समाहिताः
सदैकदेवे निरताः कृते युगे ।
अकामकर्मस्वनुरक्तचेतसः
समाप्नुवन्ति स्म परां गतिं प्रजाः ॥ ७ ॥

जगत्सु धर्मस्तु गुणत्रयं विना
मृगश्चतुष्पाद इव प्रकीर्तितः ।
जना विरोधेन विना परस्परं
गताः स्वयं स्नेहवशं युगोत्तमे ॥ ८ ॥

युगे द्वितीये प्रचुरं भुवस्तले
निबोध सत्त्वं समवर्ततार्जुन ।
स ईषदूनो व्यचलन्महामते
जगाम धर्मश्चरणेन रक्तताम् ॥ ९ ॥

चचाल धर्मश्चरणैस्त्रिभिः क्षितौ
मृगो यथा पार्थ तथाच्युतस्त्वसौ ।
जनैः सहैवाभ्युदयाय भूतले
विचित्रसत्रेषु वियुक्तमत्सरैः ॥ १० ॥

स्वधर्मनिष्ठाः स्वयमेव चासन्
स्वभावसंकल्पपरा नरास्तदा ।
अपि क्रियायामिव तत्क्रियाफले
सदैव चासीद्भुवि सत्यसंधता ॥ ११ ॥

तपांसि चक्रुर्विविधानि मानवा
बहूनि दानानि ददुश्च साधवः ।
तथापि धर्मात्तु कदापि भूतले
न तेऽचलन्नीषदपि ध्रुवं प्रजाः ॥ १२ ॥

अथैहि च द्वापरनामके युगे
प्रजाः प्रजाता विविधाश्च तत्क्रियाः ।
प्रजासु धर्मः किल नः प्रवर्तते
तदा द्विभागस्तु धनंजयावनौ ॥ १३ ॥

अधर्मधर्मौ सरतः समं सदा
तदैव विष्णुर्भुवि पीततां गतः ।
चतुर्भुजं तं च विदन्ति मानवा
निबोध वेदश्च तथा व्यवर्तत ॥ १४ ॥

ततस्त्रिवेदा इति काश्चन प्रजा
भुवि द्विवेदा इति चापराः क्वचित् ।
तथैकवेदास्त्वनृचश्च तद्युगे
जनास्त्वजानंश्च परंतप क्वचित् ॥ १५ ॥

विभिन्नशास्त्रेषु जगत्सु पाण्डव
प्रवर्तमानेषु विभिन्नशासनैः ।
तपांसि दानानि बहून्यभूव-
न्बहुप्रकारैरपि च क्रियास्तथा ॥ १६ ॥

प्रदानवृत्तावपि सुष्ठ्ववर्तत
तपःप्रवृत्ता किल राजसी प्रजा ।
अनेकदेवान्मनसा त्वकल्पय-
द्यदेकदेवानवधारणात्स्वयम् ॥ १७ ॥

असत्यसंकल्पवशान्महीतले
क्रमेण विभ्रंशवशाच्च सत्यतः ।
अवेहि पीडयन्त इति त्वमर्जुन
प्रजा महाव्याधिमहाधिभिर्भृशम् । १८ ॥

महार्थकामास्तु जना महामते
सकामकामाश्च बभूवुरन्वहम् ।
सदा भुवि स्वर्गफलाभिसन्धिनीः
प्रजा प्रकृत्या कुरुते स्म च क्रियाः ॥ १९ ॥

स्वकर्मसिद्धीपरमागतः स्वयं
प्रवर्तमानः प्रकृतेः प्रचोदनात् ।
जनस्तु जानन्नपि तद्युगेऽवना-
वधर्मकर्माण्यकरोदपि स्वयम् ॥ २० ॥

युगे चतुर्थे सह वाञ्छितैरपि
प्रयात्यसौ वाञ्छितवद्भिरन्वहम् ।
पदैकमात्रेण चरन्मृगो यथा
तथैव धर्मः किल शोच्यतां गतः ॥ २१ ॥

कलौ तु कौन्तेय युगे महाप्रभु-
र्भुवं समासाद्य स तामसान्विताम् ।
बभूव कृष्णः किल केशवो विभु-
र्जनान्समुद्धर्तुमधर्मबन्धनात् ॥ २२ ॥

स्वधर्मयज्ञादिषु न प्रवर्तते
मनो जनानां ममतातिदूषितम् ।
श्रुतिप्रमाणे स्वजनेष्वपि प्रजा
न विश्वसन्ति स्वकृतेऽपि भूतले ॥ २३ ॥

महामदक्रोधमहाभयादयः
सदापि दोषा बहवस्त्वधर्मजाः ।
उपद्रवन्ति क्षितिजान्कलौ युगे
पराः पिपासाक्षुदुपद्रवा भृशम् ॥ २४ ॥

प्रयाति धर्मस्त्वविशोचनीयतां
तपात्यये षड्गुरिवातितापितः ।
तपःप्रभावात्तु तथापि मानवा-
श्चरन्ति धर्मान्कतिचित्कलौ युगे ॥ २५ ॥

पुरा नलो नाम महीपतिर्महीं
प्रियां गुणौघैरिव लालयन्प्रियः ।
सुखप्रदाता निषधेष्वभून्महा-
न्प्रियेण धीमाननुरञ्जयन्प्रजाः ॥ २६ ॥

असौ तु भैम्या सदसि स्वयं वृतो
दृढानुरागेण च मुग्धया नलः ।
दिशां पतीनामुपलभ्य सम्मतिं
पतिव्रतारत्नमवाप भूपतिः ॥ २७ ॥

प्रकृष्य भैम्यां सहसा प्रवृत्तवा-
न्कलिः समुत्पीडयितुं स दम्पती ।
अनक्षविद्योऽपि विचारदक्षनलो
बलाद्‌क्रत्ये कलिना प्रवर्तितः ॥ २८ ॥

कलौ युगेऽस्मिन्कलिदूषितो यदि
ध्रुवं कदर्थीकृत एव मर्त्यः ।
कदाप्यसह्यः सहनीय एव वा
विधेर्विलासो विषमो हि सर्वदा ॥ २९ ॥

स पुष्करं द्यूतविहारवाञ्छया
समेत्य तेनैव पराजितो नलः ।
बलात्स्वराज्यादपि तेन धावितो
वने भ्रमन्नास्त नृपोऽपि जायया ॥ ३० ॥

अनन्यभर्त्तां विधिनार्धवाससीं
विहाय भार्यां स्वपरायणामसौ ।
अटन्नटव्यां ऋतुपर्णभूपते-
र्विरूपदेहोऽभवदश्वपालकः ॥ ३१ ॥

असावयोध्याधिपतेः सकाशा-
त्तदाक्षविद्यामुपलभ्य नैषधः ।
प्ररूढवीर्येण नवौजसा क्षणं
कलिं तु निर्धूय रराज पूर्ववत् ॥ ३२ ॥

गुणी विजित्याथ नराधिपो नलः
सहोदरं द्यूतविधौ स पुष्करम् ।
समेत्य भैमीं च सुतासुतौ पुनः
पुनश्च राज्यं जितशत्रुपालयत् ॥ ३३ ॥

जयेन्मनुष्यः कलिमक्षविद्यया
सहोदरस्ते विधिवद्युधिष्ठिरः ।
इमां च विद्यां बृहदश्वतापसा-
दजातशत्रुर्विनयादधीतवान् ॥ ३४ ॥

यदा स्वधर्मः क्षयमेति तत्क्षणं
वसुंधराऽपि क्षयिणी स्वयं भवेत् ।
सदा युगावर्तनमाश्रयन्ध्रुवं
क्षितौ तु धर्मोऽपि समं प्रवर्तते ॥ ३५ ॥

चरन्ति सश्रद्धमतन्द्रिता युगे
कलौ स्वधर्मान्भुवि ये विनास्पृहाम् ।
ध्रुवं युगान्तप्रलयं युगं च ते
तरन्ति संसारमहाम्बुधिं तथा ॥ ३६ ॥

युगे सदास्मिन्युगपत्स्वकान्तया
सह स्वधर्मांश्चरथ क्षितौ धिया ।
अतश्च तद्भाविमहाहवे ध्रुवं
जयं भजेतार्जुन धर्मकारणात् ॥ ३७ ॥

इदं समाकर्ण्य वचः स पाण्डवः
स्वधर्ममाहात्म्यमपीन्द्रनन्दनः ।
ध्रुवं प्रतस्थे वचनाच्छचीपतेः
सहोदरान्द्रष्टुमनाः क्षणाद्दिवः ॥ ३८ ॥

अथैकदा मध्यमपाण्डवाननं
विचिन्त्य साध्वी द्रुपदस्य नन्दिनी ।
वरानना साश्रुमुखी वनश्रियं
विलोकयन्त्यास्त दशैव केवलम् ॥ ३९ ॥

प्रतीक्षमाणा प्रियमात्मवल्लभं
पतिव्रतासीद्दिजयोन्मुखी सती ।
अनन्यचित्ता नभसीव चातकी
विलोकयन्ती सुखदं सुखार्थिनी ॥ ४० ॥

शशाक गन्तुं न शशीमुखी तत-
स्तदैकमप्याकुलचेतना पदम् ।
प्रवेपमाना विरहातिकर्शिता
शिलातले मोहवशादुपाविशत् ॥ ४१ ॥

तदा मृदूरू करभोपमौ हठात्
दृढं कराभ्यामवलम्ब्य सा क्षितौ ।
प्रभञ्जनेन प्रसभं प्रचालिता
पपात रम्भेव निराश्रया भुवि ॥ ४२ ॥

तथा पतन्तीं नकुलस्तु वीर्यवान्
प्रियां समुद्वीक्ष्य तपस्विनीमिमाम् ।
क्षणादगृह्णादभिगम्य पार्श्वतो
वरां कराभ्यामतिविह्वलाननाम् ॥ ४३ ॥

सहोदरामूं पतितां महीतले
जवेन राजन्नवलोक्य श्रियम् ।
इति ब्रुवन्सत्वरमेव दृष्टवान्
कृशोदरीं दीर्घदृशा वृकोदरः ॥ ४४ ॥

स्वधर्मनिष्ठां सहधर्मचारिणी-
मयोनिजां यज्ञसमुद्भवां सतीम् ।
समीक्षितुं तां पतितामुपागतः
क्षणं प्रधावन्निह धर्मनन्दनः ॥ ४५ ॥

अवेक्ष्य तां कुचलतामिवातपे
  समं समुद्विग्नमनाः सहोदरैः ।
गतां तदायासकृतातिशोच्यतां
  प्रियां समाश्वासयितुं प्रचक्रमे ॥ ४६ ॥

निजाङ्कमारोप्य नितान्तमातुरः
  स्ववल्लभां धर्मसुतो युधिष्ठिरः ।
कृशां सतीं म्लानमुखीं प्रियेण तां
  जगाद वाचं हृदयस्पृशं शुचा ॥ ४७ ॥

तवास्ति राजा द्रुपदः पिता महान्
  सहोदरः सुन्दरि कृष्ण एव ते ।
तथापि पञ्चत्वमवाप्तुमेव नः
  समागता त्वं किल पञ्चपाण्डवान् ॥ ४८ ॥

सुगुप्तहर्म्येषु सुवर्णमण्डितं
  भृशं सुखार्हं सुखमध्यशेत या ।
प्रशस्तशय्याशयनं तु सा कथं
  त्वमद्य शेषे पतिता शिलातले ॥ ४९ ॥

सरोजपादौ च सरोरुहाननं
  विवर्णभावादुपयान्ति शोच्यताम् ।
असत्कृतद्यूतवशेन तद्भवे-
  रकृतं मया मानिनि मन्दबुद्धिना ॥ ५० ॥

सुते सुखं प्राप्स्यसि पाण्डवान्पती-
नवाप्य कल्याणि तथा सुमङ्गलम् ।
इति स्वपुत्रीं मृदुभाषिणीं तदा
पिता किलास्मभ्यमदात्प्रियेण ते ॥ ५१ ॥

विधेर्विलासादनवाप्य शोभने
त्वमद्य तत्सर्वमिहैव भूतले ।
नितान्तमध्वश्रमशोककर्शिता
निपत्य शेषे मम कर्मकारणात् ॥ ५२ ॥

वने चरन्ती वनवासिभिः समं
त्वमस्यनाथेव धनंजयोन्मुखी
शिलाश्रया बाहुलतोपधायिनी
कथं नु देवि क्षपिताः क्षपाः त्वया ॥ ५३ ॥

हृदन्तरं लुट्यत एव मेऽधुना
शिरोऽपि मन्ये भ्रमतीव चिन्तया ।
असह्यदुःखं मनसोऽपि मर्मभिद्
सहेत मर्त्यः कथमात्मनानिशम् ॥ ५४ ॥

क हर्म्यवासः क वनान्तजीवितं
क राजपुत्री क च तापसी वने ।
मनांसि मथ्नाति विधिः सतामपि
विधेर्हि वैचित्र्यमतीव दारुणम् ॥ ५५ ॥

भवन्ति शूराः सुधियश्च पाण्डवा-
स्तथा बलिष्ठाश्च पराक्रमान्विताः ।
इति प्रशंसन्ति गुणान् जनास्तु न-
स्तथापि कान्ते भवतीह किं फलम् ॥ ५६ ॥

दृशौ समुन्मील्य विलोक्य प्रिये
त्वमीपदिन्दीवरपत्रलोचने ।
प्रवक्तुकामाः प्रियवल्लभास्तव
प्रियं च ते सन्निहितास्तपोधनाः ॥ ५७ ॥

अजातशत्राववलोक्य वल्लभां
वचोभिरेवैर्लपति प्रियान्तिके ।
अमुं समाश्वासयितुं समाययु-
र्जवेन धौम्यप्रमुखा द्विजोत्तमाः ॥ ५८ ॥

वचोभिराश्वास्य तपोधनास्त्वमू-
न्विभिन्नरक्षोघ्नजपांश्च ते क्रियाः ।
शुभार्थमाचक्रुरमङ्गलापहा
विशुद्धिमन्त्रान्विधिवत्तथाजपन् ॥ ५९ ॥

सुसेव्यमाना जलमिश्रवायुना
स्वभर्तृभिः शीतलचर्यया मुहुः ।
अवाप बोधं परिलब्धचेतना
क्रमेण कृष्णा शनकैः सुलोचना ॥ ६०

निशम्य मन्त्रान्जपतस्तपोधनान्
भृशं समुद्विग्नवतीन्कृशोदरी ।
निशाम्य तस्मादुदतिष्ठदञ्जसा
प्रियेण तामेव तथा च पश्यता ॥ ६१ ॥

सुविश्रमार्थं श्रमकर्शितामिमां
युधिष्ठिराद्या द्रुपदात्मजां शनैः ।
अतीव दीनां परिगृह्य वल्लभां
महातरुच्छायमुपानयन्सतीम् ॥ ६२ ॥

क्षणेन कृष्णाजिनसंस्तरे प्रियै-
रुदारशीलैरुपशायिता सती ।
शुभार्थिनस्ते शुभलक्षणाङ्कितौ
तदीयपादौ समवाहयंस्ततः ॥ ६३ ॥

प्रभातकाले विनयान्विता प्रियं
युधिष्ठिरं भ्रातृभिरन्वितं वचः ।
कृताभिषेका कृतकृत्यमर्जुनं
निधाय चित्ते महतीदमब्रवीत् ॥ ६४ ॥

शृणोतु राजन्वचनामृतं भवा-
न्ब्रवीमि यन्मे शुभसूचकं वचः ।
निशावसाने नियतेः प्रचोदना-
दपूर्वसुस्वप्न इहैव मेऽभवत् ॥ ६५ ॥

स्वयंप्रभे सुभ्रु समीपमागतं
क्षणान्मरालीगमने सुमध्यमे ।
दृशौ समुन्मील्य परंतपं प्रिये
प्रियं स्वमालोकय तापहारिणि ॥ ६६ ॥

इति ब्रुवन्मध्यमपाण्डवस्तदा
प्रवालमालां स गले निधाय मे ।
प्रफुल्लपद्मप्रमवोच्चयं प्रियो
ममोत्तमाङ्गे च पिनद्धवान्स्वयम् ॥ ६७ ॥

ननाम भक्त्या शिरसा सहोदरौ
वहन् किरीटं बहुभास्करप्रभम् ।
समालिलिङ्ग प्रणतौ सहोदरा-
वुभौ कराभ्यामुरसा स मध्यमः ॥ ६८ ॥

स वायुषु प्राण इवादिरन्वये
स पञ्चभूतेष्विव मध्यमप्रभः ।
महातरोर्मूलबलोपमो भवेत्
प्रियं तु पश्येम कदा तथाविधम् ॥ ६९ ॥

सुस्वप्नमित्थं युवती मनोरमा
महीरुहान् वा सुमनोभिरञ्चितान् ।
विचित्रवर्णानुत तद्वने खगा-
न्स पश्यति स्माऽर्जुनचिन्तया सती ॥ ७० ॥

सराजहंसद्विजकूजनं यथा-
तथा प्रमत्तभ्रमराङ्गनास्वरम् ।
मनागपि द्रौपदिकर्णसंपुटं
ध्रुवं न भेजे किल तद्वने तदा ॥ ७१ ॥

वने च तस्मिन्नवरक्तचम्पक-
प्रसूनगन्धस्त्वपि रक्तचन्दनम् ।
तथैव तस्याः प्रविवेश नासिकां
तथापि न घ्राणसुखं तदाप सा ॥ ७२ ॥

स्पृशन्मुहुर्निर्झरवारिसीकरा-
न्वहन्स मन्दं नवपुष्पसौरभम् ।
स भर्तृचिन्तामविदंश्च मारुतः
शनैर्मृगाक्ष्याः समवाहयत्तनुम् ॥ ७३ ॥

स्वयं तु भुक्तान्यपि सा मनस्विनी
फलानि पक्वानि कथं स्वजिह्वया ।
अत्रागमत्स्वादु तदीय चिन्तया
प्रतीक्षमाणार्जुनमेव वल्लभम् ॥ ७४ ॥

सुस्वप्नं शुभसूचकं सुफलदं ब्राह्मे मुहूर्ते तया
संदृष्टं कथितं तथा च मधुरं श्रुत्वा महान्तस्तु ते ।
सन्तुष्टा विजयं प्रतीक्ष्य पुरतस्तस्थुस्तथा पाण्डवाः
स स्वप्नस्त्वचिरात्प्रयच्छति फलं दृष्टो निशान्ते यदि ॥७५॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
चतुर्दशः सर्गः ॥

## पञ्चदशः सर्गः

अनेकशस्त्राण्यवाप्य वासवात्-
प्रदक्षिणीकृत्य गुरुं परंतपः ।
सुरेन्द्रसूतेन वसुंधराधरं
सह प्रतस्थे स तु गन्धमादनम् ॥ १ ॥

वियत्पथा दिव्यरथेन संचरन्
विदूरभूगोलमवेक्ष्य विस्मितः ।
सुधांशुसंपूर्णकलासमन्वितं
धनंजयश्चन्द्रमिवान्वमन्यत ॥ २ ॥

समीक्षमाणान्नितरान्विलोकय-
न्सुरेन्द्रवाहेन सुरेन्द्रनन्दनः ।
समुह्यमानो मनसापि दुष्करा-
न्प्रहृष्टचित्तोऽथ परं परंतपः ॥ ३ ॥

विगाह्यमाने गगने तथा रथे
ददर्श तस्याभिमुखं धनंजयः ।
नगेन्द्रशृङ्गाण्यतिरंहसा भुवः
समुत्पतन्तीव स विस्मितेक्षणः ॥ ४ ॥

स शैलमालाभिरलंकृताकृतिं
नगेन्द्रमाश्चर्यवशाद्व्यलोकयत् ।
विदूरवैडूर्यमयैरिवातपे
चकास्ति शृङ्गैश्च हिमावृतैरसौ ॥ ५ ॥

विशिष्टपुष्पस्तबकद्रुमैस्तत-
स्ततं लताभिश्च स गन्धमादनम् ।
अपश्यदाच्छन्नमिवोन्नतस्तनं
विचित्रवर्णाङ्कितचेलया भुवः ॥ ६ ॥

फलातिभारैरवनामितद्रुमाः
सगन्धपुष्पस्तबकान्विता लताः
जलप्रपाता मृगपक्षिणो नृणां
पृथक् च कर्षन्ति मनांसि सानुषु ॥ ७ ॥

वहन्ति मूर्ध्नात्र वने महीरुहा
बहूनि पक्वानि फलानि च स्वयम् ।
भवन्त्यतो सिद्धफलाः परं सुखं
ध्रुवं वसन्त्येव गिरौ महाजनाः ॥ ८ ॥

सदा किलाम्रातकभव्यदाडिमा-
न्तथाम्रखर्जूरफलद्रुमान्बहून् ।
वहन्ति मोचान्पनसाम्लवेतसा-
न्सनालिकेरान्लकुचांश्च सानुषु ॥ ९ ॥

तथा च सीताकमलाफलद्रुमान्
दधाति नारङ्गकबीजपूरगान् ।
सपिण्डखर्जूरतरूनपि स्वयं
परोपकाराय सदा महागिरिः ॥ १० ॥

विनामिताञ्छ्रां विविधान्महागिरिः
सतां हितायैव हितान् दधात्यसौ ।
सगन्धपुष्पानपि गन्धमादनो
बिभर्ति वृक्षान्निजरम्यभूमिषु ॥ ११ ॥

अशोकवृक्षान्कुटजांश्च पाटला-
न्गिरिस्तथा केतकरक्तचम्पकान् ।
सकोविदारांश्च महामहीरुहा-
न्दधाति भूर्ज्जान् बकुलान्सुरद्रुमान् ॥ १२ ॥

शुकैश्चकोरैः शतपत्रकोकिलै-
र्द्विरेफराजैः कलपिङ्गहारितैः ।
ददर्श धीमान्किल जीवजीवकै-
र्गिरिं विचित्रैर्विहगैरधिष्ठितम् ॥ १३ ॥

तथैव पार्थः प्रियकैश्च चातकै-
र्दढानुरक्तं मधुरं मधुस्वरैः ।
अपश्यदद्रिं विविधैः समावलि-
र्मुदैव कूजद्भिरमुं पतत्रिभिः ॥ १४ ॥

तथा मनोज्ञानि सरांसि दृष्टवान्
स पुण्डरीकैर्विततानि पाण्डवः ।
प्रफुल्लकल्हारसरोरुहैः समं
समन्ततः कोकनदोत्पलैर्भृशम् ॥ १५ ॥

ददर्श कारण्डवहंसपङ्क्तिभि-
र्जलेषु कादम्बजलप्लवङ्गमान् ।
तथा वियुक्तैश्च रथाङ्गनामभिः
समन्वितेषूदककङ्कटैरसौ ॥ १६ ॥

अपश्यदग्रे कमलोदरद्युतै-
रनल्पकिञ्जल्करजोभिरञ्चितैः ।
द्विरेफवृन्दैः कमलाकरान्बहू-
न्प्रमोदनादैर्विरुतान्धनंजयः ॥ १७ ॥

स पद्मषण्डैः किल मण्डितान्क्वचि-
च्छिखण्डिनीभिः सहितांश्छिखण्डिनः ।
अपश्यदाखण्डलसूनुरद्भुता-
न्बहून्लतामण्डलकेषु पाण्डवः ॥ १८ ॥

कलापिनश्चित्रकलापमण्डनं
नखान्तरालग्नपिनाकमण्डलम् ।
अपश्यदानन्दमयं च ताण्डवं
घनस्वनारम्भमदेन मण्डितम् ॥ १९ ॥

क्वचित्प्रियाभिः रममाणबर्हिणः
समं च विस्तीर्य विचित्रपिच्छिकाः ।
मदालसाभिर्विटपेषु नृत्यतो
मुदा द्रुमाणां स ददर्श पाण्डवः ॥ २० ॥

स नीलकण्ठान्कलकण्ठनिस्वनैः
सुदीर्घकेकास्तु समं प्रकुर्वतः ।
कृतानुरागाकलितान्व्यलोकय-
त्क्वचिद्घनानामतितूर्यगर्जनैः ॥ २१ ॥

विराजमानान्कुटजेष्विवोत्कटान्
स्वपिच्छिकाटोपचितान्पटूनयम् ।
वने मयूरान्विटपेषु दृष्टवान्
प्रियोपकृष्टान्मुकुटानिवार्जुनः ॥ २२ ॥

तथा गिरीणां शिखरेषु पाण्डवः
सुवर्णवर्णप्रसवान्मनोहरान् ।
बहूनुदारानिव भारतोमरान्
स सिन्धुवारानवलोक्य विस्मितः ॥ २३ ॥

स कर्णिकारानवलोक्य कानने
विचिन्तयामास हृदीत्थमर्जुनः ।
विना सुगन्धं स किमर्थमद्भुता-
न्प्रकृष्टवर्णान्किल सृष्टवान्विधिः ॥ २४ ॥

प्रियामुखश्रीतिलकप्रभासमं
प्रभासमानांस्तिलकान्व्यलोकयत् ।
स मन्मथोत्सुक्यकरान्मनोहरा-
न्स्वयैव धात्रा रचितान्वनावनौ ॥ २५ ॥

लता लसन्तीर्वनकुन्तकुड्मलै-

ददर्श दन्तैः सुदतीरिवार्जुनः ।

वने विचित्रा विविधाश्च यूथिकाः

प्रचाल्यमाना मरुता शनैः शनैः ॥ २६ ॥

विशिष्टगन्धस्तबकैर्विराजिता-

न्मनोभवस्याशुगकोशसंचयान् ।

प्रतोष्यमानान्भ्रमरैश्च कोकिलै-

रसावपश्यत्सहकारपादपान् ॥ २७ ॥

खगेषु वृक्षेष्वपि सर्वजन्तुषु

जलेषु जातिं जलजेषु चाव्ययम् ।

विलोकयन्नेवमचिन्तयत्स्वयं

न जातु जातिं विजहाति विश्वदृक् ॥ २८ ॥

प्रदीप्यमानः किल दिव्यतेजसा

भृशं किरीटद्युतिभिर्वियत्पथम् ।

प्रकाशयंस्तद्वनमप्यसौ महान्

विना विलम्बं वसुधां समागमत् ॥ २९ ॥

विचित्रचेलाङ्कितमङ्कमात्मजं

स्वयं समारोप्य सुतामिवाञ्छया ।

असुं धरित्री जननीव पाण्डवं

मुदा कराभ्यामिव पर्यलालयत् ॥ ३० ॥

अवाप शब्दैर्मधुरैर्न निर्वृतिं
न वा वनेऽस्मिन्नतिरम्यदर्शनैः ।
असौ विचिन्वन्स्वजनान्धनंजयः
कथं हि पश्येद्विरहीतरान्स्वयम् ॥ ३१ ॥

क्षितौ दिदृक्षुः स्वजनान्स्वचक्षुषा
स दीर्घचक्षुर्बहुदिक्षु विक्षिपन् ।
समुत्क्षिपन्तीं क्षणदामिवेक्षणं
सरोरुहाक्षीमवलोकयत् क्षणात् ॥ ३२ ॥

विलोक्य धौम्यादिमहातपोधनान्
सहोदरादीनितरांश्च फाल्गुनः ।
समीक्षमाणानमुमेव पाण्डवं
भृशं किरीटी पुलकाङ्कितोऽभवत् ॥ ३३ ॥

ज्वलन्तमग्नेः सुतवत्परंतपं
घनान्तरस्थक्षणदाभसंयुतम् ।
अमी नवाभरणानि बिभ्रतं
जनाश्च कृष्णा ददृशुश्च पाण्डवाः ॥ ३४ ॥

प्रतापवान्वज्रधरः प्रियंकरः
श्रिया ज्वलन्नाश्रितवत्सलो महान् ।
महेन्द्रवाहादवरुह्य तत्क्षणं
किरीटमाली द्रुतमाययौ ततः ॥ ३५ ॥

स लोमशाङ्घ्री विनयादुपेयिवा-
नैककतीर्थाटनपावितौ सुधीः ।
ननाम भक्त्या च किरीटतेजसा
विराजमानो मुहुरात्ममौलिना ॥ ३६ ॥

उपेत्य धौम्यं सहसा महामुनिं
पदोपकण्ठे कृतवान्कृताञ्जलिः ।
विनम्रशीर्षो मकुटप्रभान्वितः ।
किरीटनीराजनमिन्द्रनन्दनः ॥ ३७ ॥

अजातशत्रोस्तदनन्तरं महान्
वृकोदरस्यापि विनीतवानयम् ।
ननाम पादौ कृतमस्तकाञ्जलि-
र्मुहुश्च माद्रीतनयाभिनन्दितः ॥ ३८ ॥

उपेत्य कृष्णामतिमात्रकर्शितां
यथाम्बुदः शुष्ककदम्बवाटिकाम् ।
तथाश्रु मुञ्चन्परिलालयन्प्रियां
तथैव तस्थौ विजयः क्षणद्वयम् ॥ ३९ ॥

सहोदराणां महतां समागमे
विलोचनेभ्यो युगपन्महीतले ।
निपेतुरानन्दमयाश्रुबिन्दवः
स्फुटं हृदन्तात्स्फटिकाक्षवत्तदा ॥ ४० ॥

अनेकतीर्थाटनपावितं यथा
युधिष्ठिरस्याङ्घ्रियुगं किरीटिनः ।
युगं सुराशीर्वचसा तथा शिरो
मिथः समेत्याश्च पुनश्च पावितम् ॥ ४१ ॥

स सप्तपूगानवधीयमास्थितो
दितेः सुतानां नमुचेश्च सूदनः ।
तमिन्द्रवाहं समुपेत्य पाण्डवाः
प्रदक्षिणं चक्रुरनिन्दितास्ततः ॥ ४२ ॥

अतिप्रहर्षो विजयेन तद्वने
समागतानां समभून्महात्मनाम् ।
अभिप्रशंसन्स तु धर्मनन्दनं
वृकोदरं चापि ननन्द पाण्डवः ॥ ४३ ॥

अथार्घ्यपाद्यादिभिरिन्द्रसारथे-
र्मुदान्विताश्चक्रुरुदारकीर्तयः ।
सुरेन्द्रतुल्यं च युधिष्ठिरादयो
जनास्तु सत्कारमतीव मातलेः ॥ ४४ ॥

सुरालये जीवितमर्जुनस्य तत्
प्रियेण पप्रच्छुरमुं दिवौकसम् ।
अचेतुकामास्त्वपि तेन यत्कृतं
समग्रमेतत्कुरुराजवंशजाः ॥ ४५ ॥

युधिष्ठिरादीनखिलं तदब्रवी-
  द्यदर्जुनेनाचरितं सुरालये ।
स कालकेयादिवधे च मातलि-
  र्यथाकृतं तेन तथैव जिष्णुना ॥ ४६ ॥

पुनश्च धीमान्सुरसारथिस्तदा
  युधिष्ठिरायाचकथन्मुदान्वितः ।
शृणोतु च श्लाघ्यमिदं महीपते
  सदापि सर्वैर्विजयेन यत्कृतम् ॥ ४७ ॥

क्षणेन यस्या वशमापतन्ति ते
  समेतुकामा यमिनोऽपि विभ्रमैः ।
स्वयं समेताप्यमुमुर्वशी निशि
  स्वधर्मिणा साप्यमुनैव धिक्कृता ॥ ४८ ॥

परं तु तं शापमसौ न चाब्रवी-
  त्तया प्रदत्तं विजयाय मातलिः ।
सदा गुणानेव वदन्ति जिह्वया
  विहाय दोषान्हि सदैव साधवः ॥ ४९ ॥

अविग्रहृष्टानथ पञ्चपाण्डवान्
  पितेव पुत्रानतुमोदयन्प्रियान् ।
आपृच्छ्य यातां मुनिपुङ्गवानसौ
  निवर्तते स्म त्रिदिवेश्वरालयम् ॥ ५० ॥

सुराङ्गनाप्येवमनेन धिक्कृता
तदेदमाकर्ण्य वचस्तु मातलेः ।
अतीव तुष्टा द्रुपदात्मजा सती
लिलेख चित्तेन पतिं पतिव्रता ॥ ५१ ॥

गते ततोऽस्मिन्पुरुहूतसारथौ
स मध्यमध्यास्त सहोदरैः सह ।
महीसुराणां ज्वलतां महाव्रतैः
परंतपः पावकितुल्यतेजसा ॥ ५२ ॥

सुरेन्द्रदत्तानि महाधनान्यसौ
युधिष्ठिराय प्रददौ धनंजयः ।
दिवाकराभाण्यतिरूपवन्ति तु
प्रियः प्रियायै किल भूषणान्यदात् ॥ ५३ ॥

सुधाकराश्लिष्टविभावरी यथा
तथा पिबन्ती सुदती तमर्जुनम् ।
रराज दृग्भ्यां स्मरजृम्भणेन वा
वशीकृता तच्चरितेन वा भृशम् ॥ ५४ ॥

रिपुप्रमाथी विजयस्त्वनन्तरं
वचोभिरेतान्मधुरैर्महात्मनः ।
अचेतुकामानमराधिवासतो
यथावदाचष्ट स सर्वमादितः ॥ ५५ ॥

उवाच तान् तेन कृतं तु तत्तपः
किरातयुद्धं च यथाकृतं सुधीः ।
कथं महापाशुपतास्त्रमाप्तवान्
दिशांपतिभ्यश्च तथायुधान्यसौ ॥ ५६ ॥

स चित्रसेनात्स्वगवाप्तशिक्षणम् ।
दिवि प्रवासं च सुरैः सहार्जुनः
उवाच संक्षिप्य सहोदरान्प्रियान्
विशुद्धकर्मा विनयाद्यथाक्रमम् ॥ ५७ ॥

तदर्जुनोक्तं मधुनिर्भरं वचो
युधिष्ठिरः सुष्ठु निशम्य सस्पृहम् ।
दृढं परिष्वज्य सहोदरं महा-
नसिञ्चदानन्दमथाश्रुबिन्दुभिः ॥ ५८ ॥

प्रियेण कृष्णामथमेव सस्पृहं
प्रतीक्षमाणामधिगन्तुमक्षमम् ।
उवाच तीर्थाटनमात्मना कृतं
परंतपं धर्मसुतस्त्वनन्तरम् ॥ ५९ ॥

ततः समुत्थाय विनीतवान्सुधीः
सुरेन्द्रसूनुस्त्वभिलभ्य सम्मतिम् ।
पतिप्रियां द्रष्टुमना मनस्विनीं
जगाम तत्रा विरहार्तिभञ्जकः ॥ ६० ॥

स बाष्पदृग्भ्यामवलोकयन्प्रियां
विलोकयन्तीं प्रियमश्रुलोचनाम् ।
अतिप्रदालेख्यगतोपमश्चिरं
तथैव तूष्णीममरेशनन्दनः ॥ ६१ ॥

कयापि शक्त्या सममेत्य दम्पती
परस्पराश्लिष्टविशिष्टकैवशात् ।
विशृङ्खलाभ्यामिव तत्र साहसा-
त्स्वयं कराभ्यां निबबन्धतुर्दृढम् ॥ ६२ ॥

निशम्य शब्दं गगनाद्वधूवरौ
क्षणात्प्रबुद्ध्य स्वयमेव बन्धनात् ।
अपश्यतां व्योम्नि हिरण्यतेजसा
ज्वलद्विमानं ज्वलनप्रभं महत् ॥ ६३ ॥

श्रुतश्च शब्दो गगनाद्दिवौकसां
विमाननेमिस्वनमिश्रितस्तथा ।
अनेकघण्टारवसंयतस्तदा
यथा बहुव्यालमृगेन्द्रपक्षिणाम् ॥ ६४ ॥

ससिद्धगन्धर्वगणाः समन्ततो
दिनेशसंकाशविमानमन्वगुः ।
पुरन्दराधिष्ठितमप्सरोगणाः
सुराङ्गनाश्चापि रथैर्मनोहरैः ॥ ६५ ॥

अनुग्रहीतुं परिपूतपाण्डवा-
नवातरंस्ते गगनाद्दिवौकसः ।
सुरद्विपामन्तकमर्जुनान्तिकं
सुरेन्द्रमुख्यास्त्वभिनन्दितुं पुनः ॥ ६६ ॥

युधिष्ठिराद्यैः कुरुवंशनन्दनैः
सलोमशाद्यैर्मुनिभिश्च सत्कृतः ।
शतक्रतुस्ताननुगृह्य पाण्डवा-
न्छनैरवोचत्किल तान्विचक्षणान् ॥ ६७ ॥

अवेहि सह्यं किल पाण्डवाव्रतौ
कलौ युगे शक्तिरधिष्ठिता ध्रुवम् ।
चरन्ति धर्मं युगपद्यदीह चेत्
जगज्जयेरन्नखिलं च तेऽनघ ॥ ६८ ॥

सदापि यूयं युगपद्युधिष्ठिर
स्वधर्मनिष्ठा भवथेति कारणात् ।
ध्रुवं जयेध्वं भुवनत्रयं क्षणा-
ज्जयं तु वाच्यं किमु भाविसंगरे ॥ ६९ ॥

इति प्रशस्यैव शतक्रतुः पुनः
प्रहृष्टचित्तान्प्रियपाण्डुनन्दनान् ।
ततोऽनुगैः स्वर्गनिवासिभिः समं
तिरोदधे तत्क्षणमेव भूतलात् ॥ ७० ॥

मुहूर्तमेकं शशिशेखरं स्मर-
न्नुमासमालङ्कृतदेहमद्भुतम् ।
वशी समानर्च वचोभिरर्जुनो
जगन्नियन्तारमनन्यमानसः ॥ ७१ ॥

त्वमेवास्मान्दीनानवसि पवनात्साम्ब दयया
वने वा हर्म्ये वा त्वमसि जनकस्त्वं च जननी ।
त्वमाप्तस्त्वं बन्धुस्त्वमसि सकलं नः पशुपते
त्वमेवैको शश्वच्छशिधर शरण्यस्त्रिभुवने ॥ ७२ ॥

कृपासिन्धो स्वामिन्वसतु मृगयार्थं मयि सदा
ममान्तःकान्तारे बहुविधमृगाः सन्ति बहवः ।
ध्रुवं मात्सर्यादीन्हृदयविपिने पश्यतु भवा-
न्निहत्यैतान्नित्यं निवसतु मदन्ते मृगयया ॥ ७३ ॥

सहस्रं भक्तास्ते सततमवनौ सन्त्यपि विभो
दयालुं शस्त्रैस्त्वां निशितविशिखैः प्राहरमहम् ।
तथापि त्वं शम्भो मयि करुणया स्निह्यसि परं
कथंकारं स्वामिन्कथय कथयेयं तव कृपाम् ॥ ७४ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
पञ्चदशः सर्गः ॥

## षोडशः सर्गः

उद्धृत्य वेदानुदधेः स्वहस्तै-
विश्वं सिसृक्षुर्विनिहत्य दैत्यम् ।
चतुर्मुखाय प्रददौ चतुर्भि-
र्मत्स्यावताराय नमो नमस्ते ॥ १ ॥

पिपासुभिस्तैरमृतं सुराद्यैः
प्रमथ्यमाने प्रसभं पयोधौ ।
दधार शैलं किल मन्थराख्यं
कूर्मावताराय नमो नमस्ते ॥ २ ॥

भयेन दैत्यादुदधिं प्रविष्टा-
मुद्धृत्य घोणेन तथा धरित्रीम् ।
अपालयत्तामभयप्रदाता
वराहरूपाय नमो नमस्ते ॥ ३ ॥

प्रह्लादभक्त्या प्रसभं प्रकृष्टः
स्तंभाद्विनिर्गत्य निपात्य दैत्यम् ।
हठान्नखाग्रैर्हतवान्हरिर्यो
महानृसिंहाय नमो नमस्ते ॥ ४ ॥

तीर्त्वा क्षितिं खं च पदद्वयेन
त्रिविक्रमः सन्निदधे तृतीयम् ।
पदं बलेर्मूर्धनि वामनो य-
स्तस्मै स्वरूपाय नमो नमस्ते ॥ ५ ॥

यः कार्तवीर्यार्जुनवीर्यहन्ता
    मदान्धगर्विष्ठमहीपतीनाम् ।
रक्तेन संतर्प्य पितॄन्चकाशे
    तस्मै स्वरूपाय नमो नमस्ते ॥ ६ ॥

यो वीर्यशुल्कां परिणीय सीता-
    मयोनिजां योनिजरामचन्द्रः ।
अवाप रामादथ विष्णुचापं
    कोदण्डरामाय नमो नमस्ते ॥ ७ ॥

समस्तकल्याणगुणाभिरामः
    श्रिया समेतो जनकस्य पुत्र्या ।
योऽपालयत्तज्जनकस्य वाक्यं
    सत्यस्वरूपाय नमो नमस्ते ॥ ८ ॥

यस्य प्रभावादचिरादवाप
    प्रणष्टराज्यप्रियवल्लभे सः ।
नाथो हरीणां तु हरेः सहायात्
    सुग्रीवमित्राय नमो नमस्ते ॥ ९ ॥

प्रवासितो यः शरणागताय
    प्रवासिताय प्रददौ शरण्यः ।
राज्यश्रियं चाभयमात्तधन्वा
    श्रीरामरूपाय नमो नमस्ते ॥ १० ॥

श्रियान्वितः सम्बभुनक् श्रियं यः
संसेव्यमानः पवनात्मजेन ।
सहोदरैस्तैः सह जानकीशो
राजाधिराजाय नमो नमस्ते ॥ ११ ॥

गोविन्दगङ्गाधरबिन्दुजन्मा
भूयोऽपि भूम्यामवतीर्य रामः ।
कलौ युगेऽस्मिन्कलिशासनार्थे
शास्तेति यो भाति नमो नमस्ते ॥ १२ ॥

हलायुधः सन् बलरामनामा
यो रेवतीजानिररिंदमस्तान् ।
म्लेच्छाननेकानवधीद्बलिष्ठ-
स्तस्मै च रामाय नमो नमस्ते ॥ १३ ॥

यो वेणुगानैर्नवनीतहस्तो
गोपालबालैः सह गोकुलेषु ।
जहार चित्तं विजहार नित्यं
सुस्मेरकृष्णाय नमो नमस्ते ॥ १४ ॥

यो मध्यमध्यास्य सुमध्यमानां
गायन्प्रनृत्यन्प्रविशन्मनांसि ।
संमोहयामास विलासिनीना-
मद्वैतभावाय नमो नमस्ते ॥ १५ ॥

अनङ्गलेखेन समेत्य वेगा-
दुमालयस्थामपहृत्य मुग्धाम् ।
यो रुक्मिणीं पर्यणयत्स्वहर्म्ये
कल्याणकृष्णाय नमो नमस्ते ॥ १६ ॥

हा कृष्ण कृष्णाच्युत पाहि दीना-
मुच्चैर्ह्वयन्तीमिति याज्ञसेनीम् ।
अक्षय्यवस्त्रेण ररक्ष मान्यां
तस्मै शरण्याय नमो नमस्ते ॥ १७ ॥

समेत्य तां जाम्बवतीं नवोढां
निरूप्य सत्यं परिणीय भामाम् ।
स्यमन्तकाख्यं मणिमप्यवाप्नो-
दनर्घशीलाय नमो नमस्ते ॥ १८ ॥

हर्तुं मघोनस्त्वतिवृष्टिगर्वं
हस्तेन गोवर्धनमुद्दधार ।
त्रातुं च गोपालजनान्तदा य-
स्त्रिलोकनाथाय नमो नमस्ते ॥ १९ ॥

भक्तिप्रवाहादुपनीतभक्तं
सतीर्थ्यभावेन समेत्य तस्मै ।
ददौ कुचेलाय कुबेरभाग्यं
सौभाग्यनाथाय नमो नमस्ते ॥ २० ॥

कुर्वंश्च कुब्जामपि कोमलाङ्गीं
भक्त्योपकृष्टामुपगम्य गाढम् ।
कृतानुरागां कृपयोपयेमे
तस्मै मुकुन्दाय नमो नमस्ते ॥ २१ ॥

मुकुन्द नारायण विश्ववन्द्यो
नानावतारैरवितुं जनान्वः ।
संस्थाप्य धर्मान्समभूदनन्या-
मेको भवानेव जगच्छरण्यः ॥ २२ ॥

भक्त्या भयाद्वा कलिपीडनाद्वा
विश्वासपूर्वं मनसाप्यमूनि ।
पठन्ति पद्यान्यरुणोदये चे-
द्विमुक्तदुःखा विलसन्ति लोकाः ॥ २३ ॥

इति स्तुवन्नच्युतमच्युतः सन्
जिष्णोः सखायं प्रभविष्णुमीशम् ।
सन्द्रष्टुकामः कमनीयरूपं
स द्वारकाद्वारमवाप मान्यः ॥ २४ ॥

त्रिलोकचारी त्रिगुणैर्विहीनं
ददर्श कृष्णं कृतमस्तकाञ्जलिः ।
तेनापि सद्यः सह वल्लभाभ्यां
स स्वीकृतो नारदनादरूपी ॥ २५ ॥

किमस्ति वक्तुं किमपि प्रियं मां
पृष्टोऽयमित्थं हरिणा महर्षिः ।
तं प्रत्यवादीत्प्रकृतिस्वभावा-
द्दिदृक्षुरस्मि प्रियमेव किंचित् ॥ २६ ॥

अपीदमाकर्णय विश्वबन्धो
स घोषयात्रामिषमेत्य मत्तः ।
पराभवं कर्तुमजुष्टकर्मा
तेषां सतामिच्छति पाण्डवधुट् ॥ २७ ॥

सुयोधनोऽपि स्वयमेव पश्ये-
त्पराक्रमं तस्य परंतपस्य ।
ममेयमिच्छा मनसि प्रवर्तते
ददातु मे पार्थसखः प्रसादम् ॥ २८ ॥

आकर्ण्य वाचं मुनिपुङ्गवस्य
ज्ञात्वा हरिस्तस्य च चित्तवृत्तिम् ।
तं प्रत्यवादीदिव सूचयन्सन्
स सम्भवं भावि सरोजनेत्रः ॥ २९ ॥

विनापि दिव्यास्त्रमरिंदमश्रे-
ष्ठसमक्षमेवास्य सुयोधनस्य ।
पराक्रमं सत्यपराक्रमोऽसौ
प्रदर्शयिष्यत्यचिरेण पार्थः ॥ ३० ॥

तथापि पार्थान्प्रति दुष्टबुद्धे-
र्द्वेषं कदाचिन्न जहाति मूर्खः ।
विषं कदाचिन्न जहाति सर्पः
सम्यक्परैर्निर्दयमर्दितोऽपि ॥ ३१ ॥

स्मरन्निगूढार्थवचो मुरारे-
रापृच्छय कृष्णां तदनु प्रतस्थे ।
द्रष्टुं प्रवक्तुं च युधिष्ठिरादी-
न्गाण्डीवधन्वानमनुग्रहीतुम् ॥ ३२ ॥

विजित्य तामप्सरसं किरीटी
सुरैरजय्यानपि कालकेयान् ।
भ्रातॄन्समासाद्य चिरं महद्भि-
र्जैजीयमानो भृशमुल्ललास ॥ ३३ ॥

कथं कथंचिद्विजयो विसृष्टः
स्नेहातिरेकाकुलचित्तवृत्तिः ।
प्रतीक्षमाणां प्रियमीक्षमाणा-
मवाप्य कृष्णां सुदतीं रजन्याम् ॥ ३४ ॥

दृष्टिस्तथा यज्ञसमुद्भवायाः
समागमत्तस्य विशिष्टदृष्टिम् ।
अधोमुखीभूस्त्रपया चिरं सा
जित्वापि चित्तं स्थिरनिश्चयस्य ॥ ३५ ॥

किं वा कृतं तत्र कथं कथं वा
कृष्णार्जुनाभ्यां विरहातुराभ्याम् ।
को वा व्यजानान्निपुणो रसज्ञ-
स्तस्यां निशायां सुरतप्रसङ्गे ॥ ३६ ॥

ऊर्वोः शुभोरू पदयोश्च पादा-
वङ्के स्वमङ्कं सुमुखे मुखं च ।
योगाधिरूढौ सुखमन्वभूतां
वक्षोरुहौ वक्षसि सन्निवेश्य ॥ ३७ ॥

अद्वैतभावेन निमीलिताभ्यां
परस्पराश्लिष्टकलेवराभ्याम् ।
अन्योन्यसंस्पर्शसुखे स्थिताभ्यां
ताभ्यां व्रजन्त्यास्तु रजन्यदृष्टा ॥ ३८ ॥

निशा व्यरंसीदतिवृष्टियुक्ता
घनान्धकारेण घनैश्च लिप्ता ।
चन्द्रोऽप्यवाप्य द्रुपदात्मजास्यं
पार्थाननेषु प्रतिबिम्बितोऽभूत् ॥ ३९ ॥

उत्तस्थुरुन्मील्य विलोचनं ते
निशम्य नादं श्रुतिसौकुमार्यम् ।
सङ्गीतसाहित्यलयान्वितं तं
ब्राह्मे मुहूर्ते नभसा चरन्तम् ॥ ४० ॥

प्राच्यामपश्यन्दिशि वैनतेयं
संवीतरक्ताम्बरमम्बरे ते ।
आयान्तमारादरुणं च पार्था-
स्तदार्कद्युतं परमद्भुताभम् ॥ ४१ ॥

ततःपुरस्तादुपशोभमानं
सङ्गीतमालप्य समाव्रजन्तम् ।
करेण वीणामनुवादयन्तं
संदृष्टवन्तः किल नारदं ते ॥ ४२ ॥

नादेन वीणां मुखरीकृतां तां
समुद्वहन् सन् मुखरीकृतेन ।
विहायसा सोऽपि विगाहमानो
मनश्च तेषां समुपेयिवांस्तान् ॥ ४३ ॥

प्रविष्टमालेण च सत्कृतस्तै-
र्विधिप्रयुक्तेन यथा क्रमेण ।
प्रचक्रमे वक्तुमनर्घशीलान्
युधिष्ठिरादीन्मुनिरर्थयुक्तम् ॥ ४४ ॥

यत्रासते पाण्डवधर्मवृद्धा-
स्तत्रास्ति नित्यं सह धर्मिणी तैः ।
स्वधर्मनिष्ठा वसथात्र यूयं
युष्माभिरस्त्वेव सदापि कृष्णा ॥ ४५ ॥

स्वर्गे न लेभे सुखमर्जुनो य-
द्भूम्यामवाप्येत तदेव नूनम् ।
स्वर्गे तु या श्रीरमुना न दृष्टा
कृष्णाच्छलेनेह विलोक्यते सा ॥ ४६ ॥

स्वर्गेऽप्यधर्मेषु चरन्ति नार्यः
स्वर्गस्थलक्ष्मीरथ चिन्तयित्वा ।
अवातरत्सौख्यमवाप्तुकामा
स्वधर्मनिष्टैः सह वस्तुमुर्व्याम् ॥ ४७ ॥

मनुष्यशक्ति किल देवशक्तिः
सर्वास्ववस्थास्वतिरिच्यते या ।
विजानते तां विबुधा बुधाश्च
विधेर्विलासो मनसाप्यतीता ॥ ४८ ॥

पुरा हरिश्चन्द्रनलौ च रामः
प्रधाविता देवबलेन राज्यात् ।
पश्चात्स्वधर्मैर्बलमेत्य तेषा-
मवाप्य राज्यं पुनरप्यभुञ्जन् ॥ ४९ ॥

स्वधर्मनिष्ठेषु निरामयेषु
प्रीतोऽस्मि युष्मासु विशिष्य पार्थे ।
विशिष्टशस्त्रास्त्रचयानमोघान्
लेभे यतोऽयं किल दिक्पतिभ्यः ॥ ५० ॥

त्रिलोकसञ्चारिणि वाक्यमित्थं
देवर्षिवर्ये ब्रुवति प्रियेण ।
सद्यैव शस्त्रास्त्रसमुच्चयं सः
समानिनायेन्द्रसुतः समस्तम् ॥ ५१ ॥

आरब्धवान्दर्शयितुं मदद्भ्यो
महास्त्रशस्त्राणि यदा स जिष्णुः ।
निवारयामास मुनिस्तदैव
त्रिकालविद् ब्रह्मसुतस्तमित्थम् ॥ ५२ ॥

अमोघशस्त्रास्त्रचयास्त्विदानीं
नैव प्रयोज्या न च दर्शनीयाः ।
न स्वामभिख्यां निविडान्धकारे
प्रदर्शयन्ति स्वयमम्बुजानि ॥ ५३ ॥

पूर्णेन्दुवच्छ्रावणपूर्णिमायां
प्रदर्शयन्ति स्वयमेव सन्तः ।
प्रसिद्धकाले विगतान्तराये
विदग्धता नैव निषिद्धकाले ॥ ५४ ॥

अस्त्राण्यदृश्यानि भवन्त्विदानीं
भवन्तु दृश्यानि तु भावियुद्धे ।
अन्तर्दधे तत्क्षणमेवमुक्त्वा
विधातृपुत्रः स तु कामचारी ॥ ५५ ॥

अस्त्राणि चान्तर्दधिरे पुरस्ता-
स्तेषां समक्षं किल पाण्डवानाम् ।
कालं महान्तस्त्वनयप्रतटच्या-
मनुस्मरन्तो वचनं मुनेस्तत् ॥ ५६ ॥

अथैकदा तत्र वनं प्रपेदे
दुर्योधनाधिष्ठितघोषयात्रा ।
साद्यस्कयज्ञे किल यत्र राजा
युधिष्ठिरोऽवर्तत दीक्षितः सन् ॥ ५७ ॥

तद्घोषयात्राविधिकैतवेन
चिकीर्षति स्म स्वकृतार्थतां सः ।
स्वयं सुखस्थोऽपि सतां दुरात्मा
पाण्डोः सुतानां तु कदर्थनां च ॥ ५८ ॥

गन्धर्वराजः सुरराजवाचा
रथाधिरूढः पुरतः खलानाम् ।
यात्राप्रसङ्गे सहसैव तेषा-
माकाशमार्गेण समापपात ॥ ५९ ॥

तद्दुष्टबुद्धेर्विपरीतदैवा-
त्क्षणेन तत्कर्मफलं तु लभ्यात् ।
व्यावृत्य तस्यैव पपात शीर्षे
को वा विजानीत विधेर्विलासम् ॥ ६० ॥

सर्वे कुमाराः कुरुवंशजाताः
संमर्दितास्तत्र समर्दितास्तैः ।
पर्याकुलास्ते परिपीडयमाना
नागैः परीता इव सम्बभूवुः ॥ ६१ ॥

प्रागेव वेगेन मयातु तेभ्यः
पलाययामास गुरुत्वहीनः ।
साकं विकर्णेन समं स कर्णः
सर्वान्परित्यज्य विनष्टधैर्यः ॥ ६२ ॥

अशक्नुवन्मोचयितुं स्वयं वा
भ्रातॄन्स्वबन्धूनपि बन्धनस्थान् ।
अवाप्नुवन्नृपपशोरवस्थां
चुक्रोश हाहेति सुयोधनोऽपि ॥ ६३ ॥

संयम्य तानेकपटेन धूर्तान्
सार्कं वधूभिः कुरुराजपुत्रान् ।
गन्धर्ववीरास्तु सुयोधनादी-
नासन्नयन्तो नभसातिवेगात् ॥ ६४ ॥

आर्तप्रलापं युवतीजनानां
तत्कौरवाणामतिविह्वलानाम् ।
शुश्राव तेषामतिदीनकण्ठा-
दायान्तमाक्रोशमपीन्द्रसूनुः ॥ ६५ ॥

धीरः समायादनुगम्यमानो
 भीमेन वेगाद्धरिराजधन्वा ।
तानप्यपश्यद्गगने स पार्थः
 कुलापि नक्रैरिव नीयमानान् ॥ ६६ ॥

अगर्जदुच्चैः स तु वीरनादं
 युधिष्ठिरे राजनि वर्तमाने ।
को वास्ति भूम्यामधुनैवमस्मान्
 कुरून्पराभावयितुं प्रवृत्तः ॥ ६७ ॥

सर्वान्कुरून्मुञ्चत मुञ्चतेति
 क्रोधाकुलः सन् पुरतः प्रधावन् ।
गन्धर्ववीरान्च्छरवृष्टिपातै
 र्निरोधयामास परंतपोऽसौ ॥ ६८ ॥

गन्धर्वराजस्तु सुयोधनं तं
 कर्षन् समेत्यान्तिकमर्जुनस्य ।
उवाच बीभत्सुमिदं विनीतो
 निर्दिश्य दुर्योधनदुष्प्रवृत्तिम् ॥ ६९ ॥

सखे नियोगादधुना पितुस्ते
 मया किरीटिन् कृतमेतदेवम् ।
परं त्वयाहं रभसा निरुद्ध-
 स्त्वतो मया ब्रूहि किमत्र कार्यम् ॥ ७० ॥

गन्धर्वराजस्य वचस्तदानीं
श्रुत्वा महात्मा सहसा प्रधावन् ।
प्रशान्तमूर्तिः प्रकृतेः प्रचोदनात्
प्रशान्त्वयामास युधिष्ठिरस्तम् ॥ ७१ ॥

एतच्च मर्षत्वपराधमेकं
भ्राता कृतं मे सदयं दयालो ।
तं धर्मपुत्रस्त्विति धर्मबुद्ध्या
पश्चाद्ययाचे किल चित्रसेनम् ॥ ७२ ॥

विमुच्य सद्यैव सुयोधनादीन्
गन्धर्वराजस्त्वथ बन्धनस्थान् ।
तिरोबभूव स्वजनैः समेतो
विहायसा पाण्डुसुतान्विहाय ॥ ७३ ॥

जित्वा क्षिप्रमतुल्यशक्तिविभवाद्गन्धर्वसैन्यं बला-
देकोऽपीत्थमरिंदमोप्यरिममुं दुर्योधनं बन्धनात् ।
बन्धुस्नेहवशाद्विमोच्य वचसा भ्रातुश्च भक्त्या सुधी-
र्भ्रातॄणां निकटे रराज विजयः श्रीचक्रचूडामणिः ॥७४॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
षोडशः सर्गः ॥

---

## सप्तदशः सर्गः

पार्थास्तु संवत्सरमेकमुर्व्यां
विवत्सवस्ते विधिना प्रयुक्ताः ।
अज्ञातचर्याय पृथक्पथा ययुः
परेच्छया वृत्तिमुपार्जयन्तः ॥ १ ॥

नाम्ना स कङ्कस्त्वथ धर्मपुत्रो
आख्या द्विजातिर्जनरक्षणार्थम् ।
विनीतवेषेण विराटराजं
गत्वा समास्तारपदं सिषेवे ॥ २ ॥

स वल्लवाख्योऽहमिति ब्रुवन्सन्
सूदस्य भीमोऽप्यवलम्ब्य वेषम् ।
स्वरूपयोग्येऽधिकृतो विराटे
महानसाध्यक्षपदे नृपेण ॥ ३ ॥

बृहन्नलाख्यो विजयोऽपि षण्डः
परीक्षितः स्त्रीभिरनिन्दितात्मा ।
न्ययोजि तत्रैव नृपात्मजाया
विधेर्वलान्नर्तनशिक्षणाय ॥ ४ ॥

आहूयमानो नकुलोऽपि लोकैः
स ग्रन्थिको नाम विराटराज्ये ।
अभ्यस्तविद्यैर्हयरक्षकाणा-
मत्रैवमध्यक्षपदेऽध्यकारि ॥ ५ ॥

अरिष्टनेमिस्त्विति नामधेय-
माल्म्ब्य मान्यो नकुलानुजोऽपि ।
गवां तथाऽध्यक्ष इतीह राज्ये
तेनैव राज्ञा विधिना नियुक्तः ॥ ६ ॥

आख्यायमाना किल मालिनीति
विराटराज्ये वरवर्णिनी सा ।
कृष्णा सुदेष्णामिह राजपत्नी-
मुपेत्य सैरन्ध्र्युपतिष्ठते स्म ॥ ७ ॥

जीमूतनामानमहंकृतिस्थं
भीमो महामल्लमहन्कृती सः ।
द्वंद्वाहवे वल्लवनामधारी
क्रीडामिषेण स्वयमागतं तम् ॥ ८ ॥

अन्तःपुरस्त्रीभिरथप्रयुक्तः
स्वविक्रमं द्रष्टुमभीप्सुभिः सः ।
पञ्चास्यशार्दूलवराहसत्त्वै-
र्विक्रीड भीमस्तु विनापि कामम् ॥ ९ ॥

मासेष्वतीतेषु दशस्वमीषा-
मज्ञातवासं वसतां कदाचित् ।
सेनापतिः कीचकनामधेयो
ददर्श कृष्णामतिसुन्दराङ्गीम् ॥ १० ॥

इतस्ततस्तामनुगम्य कृष्णा-
मनन्यचिन्तापर एव साध्वीम् ।
अनङ्गतप्तः स तु वीरपत्नी-
मसभ्यमेतत्प्रललाप धूर्तः ॥ ११ ॥

स्वपादघातेन मम स्वसा सा
ध्रुवं सुषेणा कुसुमस्रजं त्वाम् ।
जानामि सुभ्रु ग्लपयत्यतीव
संदर्शनीयामतिकोमलाङ्गीम् ॥ १२ ॥

अनङ्गतापं शमय त्वदङ्गैः
समेत्य मां सुन्दरि वीरसिंहम् ।
आराध्यमानं निखिलैः पदं तत्
सर्वेश्वरीभावमवाप्नुहि त्वम् ॥ १३ ॥

श्रुत्वा स्मरोन्मत्तमुखागतं त
द्विदीर्णचित्तापि विना भयं सा ।
अकातरत्वाच्च पतिव्रतात्वात्
प्रत्यब्रवीत्पाण्डवधर्मपत्नी ॥ १४ ॥

अभीहसे चित्तमसत्पथेन
प्रवर्तितुं ते कथमेवमद्य ।
दृष्टिं स्वदारेषु निवर्तय त्वं
यतो विगीतः परदारमोहः ॥ १५ ॥

इत्येवमुक्त्वा द्रुपदस्य पुत्री
व्युत्क्रम्य सा दूरमपाससर्प ।
सौदामिनी प्रावृषि मेघशब्दा-
दहश्यतामेति जवेन पूर्वम् ॥ १६

उच्चैः स गर्जन्नतिरोषवाग्भिः
सहोदरीसौधमवाप्यमूर्खः ।
स्वस्ले निवेद्याखिलमक्षमः सन्
जगाम गेहं कृतमन्त्र एव ॥ १७ ॥

आहूय पार्श्वे द्रुपदात्मजां ता-
मथैकदा साचकथत्सुपेष्णा ।
सैरन्ध्रि सत्यं तृषितास्म्यतीव
भ्रातुः सुरामाहर मन्दिरान्मे ॥ १८ ॥

पिधाय कर्णौ सहसा कठोरं
निशम्य वाचं नरपालपत्न्याः ।
उवाच कृष्णाप्यविचारितं त-
द्विधेर्विलासं परिचिन्तयन्ती ॥ १९ ॥

स्वभावदुष्टस्य मनो नियन्तुं
यच्छक्तिमत्स्यात् कुपथाद्बलेन ।
स्वामित्वमर्थ्यं तु तदेव सद्भिः
समुच्यमानं भवती च वेत्ति ॥ २० ॥

तथापि हन्त स्वयमेव देवि
प्रवर्तयित्री भवतीह चित्तम् ।
सन्त्येव बह्वयः परिचारिकास्ते
नियुज्यतामन्यतमा च तासु ॥ २१ ॥

श्रुत्वा सुषेणा पुनरित्युवाच
तत्कामवृत्तित्वमवेक्ष्य भद्रे ।
बिभेमि भीरुत्वमवैमि तेऽद्य-
मनुत्तरं गच्छ विना विलम्बम् ॥ २२ ॥

राज्ञ्या विसृष्टापि पतिव्रता सा
मार्गेण कृष्णा चकिता चरन्ती ।
आदित्यदेवं शरणं व्रजन्ती
विवेश तद्गेहमतीव दीना ॥ २३ ॥

तदोत्तरीयाञ्चलमुत्तमायाः
निर्लज्जमाकृष्य परामृशन्तम् ।
तं पापमाक्षिप्य सभां प्रविष्टा
लक्ष्यात्स्रमन्सोऽपि पपात भूम्याम् ॥ २४ ॥

स कीचकः क्रोधमवाप्य वेगा-
त्समुत्थितः सन्पतितोऽपि भूमेः ।
जग्राह कृष्णामनुधाव्य साध्वीं
क्षितीश्वरे पश्यति केशपक्षे ॥ २५ ॥

क्षिप्तः सुदूरं किल रक्षसाऽसौ
केनापि सर्पशहितेन सद्यः ।
फलं विना सा सुचिरं विलप्य
ससाध्वसान्तःपुरमाविवेश ॥ २६ ॥

तदाऽनभिज्ञेव तथागतां तां
सैरन्ध्रिमभ्येत्य शनैर्लपन्तीम् ।
स्वयं सुदेष्णाऽश्रुमुखीमपृच्छ-
त्त्वया सुरा मेऽत्र किमाहृता वा ॥ २७ ॥

आकम्प्य शाखामवनीरुहस्य
किं पृच्छसि त्वं पतनस्य हेतुम् ।
भ्रातुस्तव द्रक्ष्यसि मन्दबुद्धेः
शीघ्रं मुमूर्षोर्विधिना विपत्तिम् ॥ २८ ॥

प्रत्युत्तरं दत्तवतीत्थमार्या
हेतुं तदा पृष्टवतीं सुदेष्णाम् ।
अवाप सा क्षत्रियराजकन्या
भीमस्य शय्यां सहसा निशीथे ॥ २९ ॥

वारं च वारं परिभूयमाना-
मित्थं परेण त्वयि वर्तमाने ।
निद्रामुपास्से प्रियवल्लभां मां
कथं नु पश्यन्नपि नाथ दीनाम् ॥ ३० ॥

स्वाधमं यद्यवलोकयेयं
  भूयोऽपि जीवन्तमहं खलं तम् ।
तर्हीदमेव प्रियनाथ सत्यं
  सम्भावनं मे चरमं निबोध ॥ ३१ ॥

इत्थं लपन्ती द्रुपदस्य पुत्री
  निपत्य तस्योरसि मन्दभाग्या ।
असुस्रवदश्रूण्यतिदुःखिता सा
  दीर्घं रुदन्ती किल दीनदीनम् ॥ ३२ ॥

कमप्युपायं सहसा विधाय
  वधं प्रतिज्ञाय च कीचकस्य ।
स सान्त्वयामास वृकोदरस्तां
  विसर्जयामास च याज्ञसेनीम् ॥ ३३ ॥

कृष्णां परे ह्यपि पूर्ववत्तां
  सकाममभ्यर्थयमानमित्थम् ।
अनुस्मरन्ती प्रियभीमवाक्यं
  तमब्रवीत्कापुरुषं सुधीरा ॥ ३४ ॥

आकाङ्क्षसे सम्प्रति मान्मथस्य
  व्याधेस्तु मत्तः शमनं किलाद्य ।
प्रविश्य तूर्णीं निशि नृत्तशालां
  सज्जीभव त्वं सुरतोत्सवार्थम् ॥ ३५ ॥

स्मरस्य सोपानपथेन सौधं
तथैव मत्तोऽनुभव त्वमेत्य ।
रतेः सुखं चाननुभूतपूर्वं
दारेष्वलभ्यं लभसे यथैव ॥ ३६ ॥

अभीष्टसंपत्तिमभूतपूर्वां
विचिन्तयन् तच्छ्रवणेन मूढः ।
तामेव शालामविशन्निशीथे
धृत्वा स्वयं मण्डनमन्त्यमेव ॥ ३७ ॥

स्वयं यथोपायमुपस्थितोऽसौ
वृकोदरस्तत्र तु पूर्वमेव ।
अहन्प्रियायामवलोकयन्त्यां
तं मुष्टिपातैः किल सूतपुत्रम् ॥ ३८ ॥

आकर्णयन्तस्त्वथ कीचकान्तं
तत्रागमंस्तस्य सहोदराश्च ।
विलोक्य बन्धोर्मृतदेहमस्य
पार्श्वे च कृष्णामतिरोषमापुः ॥ ३९ ॥

संस्कारमर्हत्यमुना सहैषा
कामेन बद्धेति विधिं विधाय ।
बद्ध्वा तरस्तामनयन्स्मशानं
संयम्य संस्कर्तुमनेन सार्धम् ॥ ४० ॥

चुक्रोश हा हा जगदीश्वरेत्थं
परैर्गृहीतां परिपीडितां मां
एभ्यः परित्राणपरायणार्ता
त्रायस्व दीनामबलामनाथाम् ॥ ४१ ॥

प्रधाव्य तत्स्थानमतीव वेगा-
द्भीमेन वेषेण तरून् प्रगृह्य ।
भ्रातॄंश्च सर्वानपि कीचकस्य
निहत्य भीमो निलयं जगाम ॥ ४२ ॥

अत्रान्तरे चारमुखादजाना-
त्स कीचकस्यापि समूलनाशम् ।
सुविभ्रमप्रेरितमानिकार्यं
विचिन्तयामास च पाण्डवद्विट् ॥ ४३ ॥

तदैव कर्णप्रमुखान्विचार्य
सुयोधनो निश्चितवान्मदान्धः ।
योद्धुं च धूर्तस्तु विराटराजं
श्रियं तदीयामपहर्तुमिच्छन् ॥ ४४ ॥

त्रिगर्तराजं दिशि दक्षिणस्यां
नियुज्य तद्गोग्रहणार्थमादौ । ' हृ
उद्दण्डवीर्यैः सह दण्डयात्रां
गर्वेण पश्चात्स्वयमादिदेश ॥ ४५ ॥

गाः काल्यमाना इति तैस्त्रिगर्तै-
    राज्ञाय सद्यः सविराटराजः ।
अनीकमारादरुषत्परस्य
    चम्वा महत्या सह वीरयोद्धा ॥ ४६ ॥

भीमेन मुक्तस्त्वथ रात्रियुद्धे
    विराटराजो रिपुभि र्गृहीतः ।
भीमेन बद्धोऽपि युधिष्ठिरेण
    तथा सुशर्मा कृपया विमुक्तः ॥ ४७ ॥

आशामुदीच्यामपि धार्तराष्ट्रै-
    रपाह्रियन्तेति निशम्य गावः ।
योषित्समक्षं रणघोषमुच्चै
    र्वैराटिराक्रोशदतीव भीरुः ॥ ४८ ॥

बृहन्नलैषा विजयस्य पूर्वं
    वनं दिधक्षोः किल खाण्डवाख्यम् ।
चकार सारथ्यमविह्वलैव
    सूतस्य कर्मण्यथ सा नियोज्या ॥ ४९ ॥

इदं तु सैरन्ध्रिवचो निशम्य
    स्वस्रा तदैवोत्तरयोत्तरः सः ।
आनीतमेकं कवचं त्वयच्छ-
    द्बृहन्नलायै विजयाय युद्धे ॥ ५० ॥

पाञ्चालिकार्थं सखि कौरवाणा-
  मुपाहर त्वं वसनानि तेषाम् ।
बृहन्नले पैरवमानितां ता-
  मनुस्मरन्ती द्रुपदस्य पुत्रीम् ॥ ५१ ॥

इत्युत्तरायास्तु निशम्य वाचं
  बृहन्नला प्रत्यवदत्तदानीम् ।
सहोदरे जेतरि ते रिपूणां
  को नाम भारो मम भूतलेऽस्मिन् ॥ ५२ ॥

इति प्रदायोत्तरमुत्तरायै
  सहोत्तरेणैव ततः प्रतस्थे ।
उद्घुष्यमाणो जयशब्दमुच्चैः
  वैराटिरप्याहवभूमिमाप ॥ ५३ ॥

क्रेंकारवं तत्र महारथानां
  वैराटिराजौ गजबृंहितं च ।
ज्यानां च घोषं धनुषां च टंकां
  शुश्राव भीरुर्हयहेषितं च ॥ ५४ ॥

रथादवप्लुत्य स वेपमानो
  दुद्राव गेहाभिमुखं भयेन ।
पलायमानं तमनुप्रधाव-
  न्निवर्तयामास परंतपोऽपि ॥ ५५ ॥

अत्यन्तभीरुर्भयविह्वलोऽसौ
विराटराजस्य सुतस्तदाऽऽह ।
बृहन्नलां दीनवचोभिरित्थं
सस्वेदगात्रः परिदह्यमानः ॥ ५६ ॥

बृहन्नले मृत्युमुखे सखि त्व-
माकृष्य न प्रक्षिप सांप्रतं माम् ।
भवामि नाहं कृतशस्त्रविद्यः
स्त्रीनिर्विशेषोऽस्मि रणेष्वशक्तः ॥ ५७ ॥

अस्मान्निवर्तस्व विचिन्त्य भावि
व्यायामबाहुल्यरणादपि त्वम् ।
जीवन्हि भद्रे पुरुषस्त्वनन्यां
भद्राणि संपश्यति धर्मबुद्ध्या ॥ ५८ ॥

हरन्तु कामं कुरवस्तु गावः
सर्वास्तथान्यद्धनमस्मदीयम् ।
भवन्ति सर्वे कुरवो महार्हाः
धने हृते मे तव नात्र कार्यम् ॥ ५९ ॥

तेभ्यो नमोवाकमतः प्रयोज्य
निवर्तयास्माद्धृदयं रथं च ।
श्रद्धा यदि स्याचव योद्धुमेतान्
विसृज्य तन्मां विहरात्र युद्धे ॥ ६० ॥

वैराटिमेवं प्रलपन्तमग्रे
प्रयाचमानं च पलायनाय ।
हस्ते गृहीत्वा विजयो यमाये
संप्रेरयन्नेव रणाय धीमान् ॥ ६१ ॥

उद्घुष्य मध्ये कथमङ्गनानां
मध्ये रिपूणां त्वतिकातरोऽसि ।
यः शत्रवे दर्शयति स्वपृष्ठं
भयात्प्रधावन्स विनाशमेति ॥ ६२ ॥

अद्राव्य शत्रूनविजित्य शस्त्रै-
रस्मात्प्रदेशादनिवर्त्य धेनूः ।
निबोध नाहं तु निवर्तयेयं
रथं कुमारेति ममैष सर्गः ॥ ६३ ॥

योद्धुं स्वयं नोत्सहसे यदि त्वं
प्रदेहि सूत्त्वमधुना हयान्मे ।
अहं यथाशक्ति जयं समीप्सु-
र्मदान्धदुष्टान्प्रहरामि शत्रून् ॥ ६४ ॥

आरोपयामास रथं पुनस्तं
प्रशान्त्वयन्नुत्तरमात्मशक्त्या ।
स्मृत्वाऽऽज्ञनेयं किल युद्धभूम्यां
सज्जो बभूवात्मरिपून्स योद्धुम् ॥ ६५ ॥

तमङ्गराजो बहुधा तथाविधं
दृष्ट्वाऽथ सैन्येषु विकल्पयत्सु ।
उवाच गांगेयमुदात्तभावं
करेण निर्दिश्य बृहन्नलाख्यम् ॥ ६६ ॥

तं क्लीबरूपं पुरुषं महारथे
गांगेय पश्यात्मदृशा महात्मन् ।
सूतद्वितीयं सवितृप्रतापं
तेजोच्चयेनावृतगात्रयष्टिम् ॥ ६७ ॥

षण्डोऽपि पाण्डुसुत एव भवेत्स जिष्णुः
प्रच्छन्नवेष इह नूनमसौ विभाति ।
कोऽन्यः पुमान् गरुडवाहनमन्तरेण
द्रष्टुं मनागपि महाफणिनं क्षमेत ॥ ६८ ॥

क्रोधाग्निं चिरसंभृतं सपदि संजातं तु संकर्षणा-
द्भीष्मोऽप्यत्येव पराक्रमेण स हठाद्रमासु शक्त्या शरान् ।
कौन्तेयं प्रतियोद्धुमत्र भुवने को नाम शक्नोत्यमुं
संपश्यास्य नियन्त्रणप्रवकृतं शार्दूलविक्रीडितम् ॥ ६९ ॥

इति श्रीरामसुब्रह्मण्यविरचिते धनञ्जयविजये महाकाव्ये
सप्तदशः सर्गः ॥

## अष्टादशः सर्गः

दुर्योधनः समाकर्ण्य भारद्वाजस्य तद्वचः ।
इत्थं प्रत्यभिचिक्षेप बुद्धिभिन्नं तु मन्दभाक् ॥ १ ॥

आचार्यस्येत्थमस्थाने तर्हि स्यात् परिदेवितम् ।
अयुक्तावसरे पार्थो व्यक्तरूपी भवेद्यदि ॥ २ ॥

उत्साहो भज्यते नूनं परपक्षप्रशंसया ।
अस्माकं वीरयोद्धृणां युयुत्सूनां रणोन्मुखे ॥ ३ ॥

उपक्रमोपसंहारवैरूप्यमिव सम्भवेत् ।
दुर्वादिसमये वाक्यं भारद्वाजस्य तेऽधुना ॥ ४ ॥

तदनु प्राह कर्णोऽपि सर्वांस्तानवलोकयन् ।
भवतामपि सर्वेषां जायते वेपथुः कथम् ॥ ५ ॥

भीतिरेवात्र युष्माकं भीरूणामाततायिनम् ।
नूनं सिंहीकरोत्येव नैव तस्य पराक्रमः ॥ ६ ॥

सर्वे यूयं समं गोभिर्हस्तिनामभिसर्पत ।
वयं पार्थमपार्थं वा वारयामो न संशयः ॥ ७ ॥

श्रुत्वा राधेयवाक्यं तत्सत्यं प्रोवाच गौतमः ।
अमुना साहसेन स्यान्न किंचिदपि ते फलम् ॥ ८ ॥

कथं किरीटिना योद्धुं महेशसहयुद्धृणा ।
आशंससे त्वमेकाकी महेन्द्रसहकृत्वना ॥ ९ ॥

तव स्पर्धा तु पार्थेन नूनं नाशाय ते भवेत् ।
स्पर्धा मत्तगजस्यापि भवेत्सिंहेन कीदृशी ॥ १० ॥

न्यक्कारेण गुरोर्द्रौणिः क्रुद्धः सोऽपि तमब्रवीत् ।
दृश्यतां कुरुराजस्य परिच्छेदविदग्धता ॥ ११ ॥

स्थानेऽस्थाने च गर्विष्ठो गुरुत्वरहितोप्यसौ ।
युद्धधर्मानभिज्ञश्च बहुभाषी च वर्तते ॥ १२ ॥

विशेषज्ञानशून्योऽपि कार्येषु विमुखः सदा ।
राधेयो कुरुराजस्य पूजास्थानं भवत्यसौ ॥ १३ ॥

परं परीक्ष्य कर्तारोप्याप्तवाचोऽपि कर्मठाः ।
पुरोभागिन एवास्य संवृत्ताः संततं वयम् ॥ १४ ॥

पित्तोपहतचित्तानां मधुरं चास्ति तिक्तकम् ।
सर्वं स्वभावदुष्टस्तु दुष्टमेवावगच्छति ॥ १५ ॥

प्रत्युक्तया वा किमुक्तया वा भीताःस्मः सर्वथा वयम् ।
युद्ध्यतां कुरुराजार्थे सोऽङ्गराजः प्रतापवान् ॥ १६ ॥

कोलाहलायमानेषु तेष्वित्थं स पितामहः ।
सर्वान् तान् सान्त्वयामास सौम्यवाक्यैस्तदा सुधीः ॥ १७

क्षाम्यत्वाचार्यवर्यात्र क्षाम्यन्तु च तथेतराः ।
कलहो युद्धकालेऽस्मिन्नयुक्तश्चेति मे मतिः ॥ १८ ॥

आचार्य भवतो वाक्यं पथ्यं तथ्यं च वर्तते ।
उत्तेजनार्थं वीराणां राधेयोप्येवमुक्तवान् ॥ १९ ॥

तावत्सोऽभूदथ क्रुद्धो यावदग्रे परंतपः ।
कर्णं कर्णान्तविश्रान्तलोचनाभ्यां व्यलोकयत् ॥ २० ॥

निजरूपं समासाद्य तस्थौ शूरस्तदार्जुनः ।
संगृह्य स्मरणेनैव शम्याः स्वायुधसंचयम् ॥ २१ ॥

तद्रथे युयुजे धीरः केतनं कपिलक्षणम् ।
अन्तः स्मरन्हनूमन्तं सर्वत्र जयहेतुकम् ॥ २२ ॥

नियुक्तवान्स गाण्डीवी वैराटिं सूतकर्मणि ।
स्वयमेकरथो धीमान् पद्रथानमियुक्तवान् ॥ २३ ॥

भीष्मद्रोणादिमान्येभ्यः प्रतियोद्धृभ्य एव सः ।
नमस्काराशुगानाशु गुरुभक्तः प्रयुक्तवान् ॥ २४ ॥

पार्थयोगेन संतुष्टः शङ्खास्स भयमाप्नुवन् ।
उत्तरस्तु द्विभावोऽभूत्गङ्गायमुनयोरिव ॥ २५ ॥

दुर्योधनस्य सैन्येषु क्षुभितेषु पुनः पुनः ।
पितामहस्तु पार्थानां प्रतिज्ञाकालमब्रवीत् ॥ २६ ॥

द्वौ द्वावित्यतिपासौ च पञ्चमे पञ्चमे समे ।
ज्योतिषामतिचारेण भवतः सर्गमण्डले ॥ २७ ॥

व्यतीताः पञ्चमासाश्च वर्षाश्चापि त्रयोदश ।
प्रकाशयेत्कथं धीमानकाले च स्वमन्यथा ॥ २८ ॥

जिष्णुर्नैव निवर्तेत सर्वदापि जयं विना ।
नातः सम्भावना युक्तं वदंशप्रतिपादना ॥ २९ ॥

पितामहस्य भीष्मस्य तद्वाक्यं न्याय्यमप्यसौ ।
दुर्योधनस्तु लोभेन तथ्यं तन्नाभ्युपागमत् ॥ ३० ॥

ततो बलैकदेशेन प्रतस्थे धेनुभिः समम् ।
कर्णवाक्यानुरोधेन मूढः स्वनगरं प्रति ॥ ३१ ॥

अथ प्रदर्शयामास कराग्रेण परंतपः ।
तं तं रथं विपक्षाणामुत्तराय कपिध्वजः ॥ ३२ ॥

रथ एष तु कर्णस्य हस्तिकक्षाङ्कितध्वजः ।
पश्य पश्यात्र सेनाग्रे दृश्यते स्पष्टमेव यः ॥ ३३ ॥

आचार्यस्य रथस्त्वेषथमूमध्येऽत्र दृश्यते ।
वेदिध्वजेन वैराटिन् भ्राजमानो महात्मनः ॥ ३४ ॥

उत्तरात्तैव पश्यायमश्वत्थाम्नो धनुध्वजः ।
वाहिनीरुत्तरेणैव स्यन्दनस्तु समीक्ष्यते ॥ ३५ ॥

तस्मात्पश्चात्तु संपश्य तालध्वजमनुत्तमम्
अस्मत्पितामहस्यासुं स्यन्दनं शीघ्रगामिनम् ॥ ३६ ॥

शत्रुपक्षस्थानित्थमेकैकमपि निर्दिशन् ।
पार्थो व्यापारयामास परितस्तस्य वीक्षणम् ॥ ३७ ॥

उत्तरं प्राह पश्यन्तं संभ्रमेण धनंजयः ।
दक्षिणां तत्क्षणं धीमान् हस्तेन निर्दिशन्दिशम् ॥ ३८ ॥

प्रधावन्दृश्यते योऽसौ दूरतः सर्पकेतनः ।
रथोऽस्माकमरातेःस्यात् धार्तराष्ट्रस्य दुर्मतेः ॥ ३९ ॥

